महाराजाधिराज-कामेश्वरसिंह-ग्रन्थमालायाः

द्वादशं पुष्पम्

म० म० सचलमिश्रकृतः

# स्मृतितत्त्वसमुच्चयः





सम्पादकाः

डॉ० जयमन्त मिश्रः

पं० श्रीधर्मनाथ झा

डॉ० शशिनाथ झा



प्रकाशकः

**कामेश्वरसिंह-दरभंगा संस्कृत विश्वविद्यालयः**

महाराजाधिराज-कामेश्वरसिंहग्रन्थमाला--१२

म० म० सचलमिश्रकृतः

# स्मृतितत्त्वसमुच्चयः



सम्पादकाः
डॉ० जयमन्त मिश्रः
पं० श्रीधर्मनाथ झा
डॉ० शशिनाथ झा

कामेश्वरसिंह-दरभंगा संस्कृत विश्वविद्यालयः

# आमुखम्

अथायं प्रकाश्यते जगत्प्रसिद्ध-म० म० सचलमिश्रकृतः स्मृति-तत्त्वसमुच्चयो नाम धर्मशास्त्रीयो निबन्धः। अनेन सामान्य-धर्म-तत्त्वान्वेषिणामुपकारः स्यात्, तत्त्वान्वेषिणां च परितोषोऽपि। धर्म-शास्त्रीय-व्यावहारिक-निर्णयभूतानां सिद्धान्तवचनानां क्रमपुरस्सरं संग्राहकेऽस्मिन् ग्रन्थे धर्मस्य सारः प्रस्तुतोऽवलोक्यते। एतस्य प्रामाणिकता नितरां मान्यतामर्हति, यतो हि आप्तजनसंगृहीतोऽयं ग्रन्थः, ग्रन्थकारश्च न्यायालयीय-निर्णायकत्वेन सर्वकारीय-मान्यता-प्राप्त आसीदिति प्रसिद्धमेव। अद्यपर्यन्तं तिरोहितोयं ग्रन्थः प्रकाशतां गत इति परमप्रमोदजनकम्। एतस्य मूलपाण्डुलिपिः प्राचीनाऽस्पष्टा चासीत्, तत्प्रतिलिप्यादिकरणेन पं० श्रीधर्मनाथ झा शर्मा, पाठसंशोधने तदुद्धारे च सहायकः डॉ० श्रीशशिनाथ झा शर्मा धन्यवादार्हौ, एतयोः साहाय्येनाचिरेणैव ग्रन्थोयं प्रकाशितः। मन्ये ग्रन्थेनानेन धार्मिकतत्त्वानां प्रचारः, धर्मतत्त्वान्वेषिणां च सन्तोषः स्यादिति शम्।

डॉ० जयमन्त मिश्रः

१२-१२।८४ कुलपतिः

# विषयसूची

# भूमिका

भारतीयाचारव्यवहाराणां नियमा धर्मशास्त्रे निबद्धाः सन्ति। तदनुसारमेव अत्रत्या धार्मिकी, सामाजिकी, राजनैतिकी, वैवादिकी च व्यवस्था प्रचलति। एतासां व्यवस्थानां धर्मशास्त्रीयविशालग्रन्थेषु अनुशीलनं सामान्यजिज्ञासूनां दुष्करमिति परमकृपया मान्यै निबन्धकारैः तत्सारमादाय संक्षिप्ततया विषयक्रमेण स्मृतिवचनानां संग्रहः प्रस्तुतः। तत्र म० म० हरिनाथोपाध्यायस्य स्मृतिसारसमुच्चयः, विश्वेश्वरोपाध्यायस्य स्मृतिसमुच्चयः, म०म० वाचस्पतिमिश्रस्य कृत्यमहार्णवः, म० म० वामदेवस्य गूढार्थदीपिका, म० म० उपाध्यायस्य स्मृतिदीपिकेत्यादयो ग्रन्थाः प्रसिद्धाः सन्ति। विषयमेनमवलम्ब्य तत्रभवता म० म० सचलमिश्रेण नानानिबन्धेभ्यः समाजे प्रचलितव्यवहारानुरूपं वचनं संगृह्य स्मृतितत्त्वसमुच्चयः प्रणीतः। अत्र आचार-कृत्य-श्राद्ध-तिथि-दाय-प्रायश्चित्तप्रभृतीनां व्यावहारिकं शास्त्रीयं वचनं संगृहीतम्। सामान्यजिज्ञासूनां कृते ग्रन्थरत्नमिदमतीवोपयोगि विद्यते।

एतद्ग्रन्थस्य द्वे हस्तलिखितपुस्तिके अस्माकं विश्वविद्यालये उपलब्धे। तत्र एतन्नाम निर्दिष्टमस्ति—"नानानिबन्धवचनसंग्रहः" म० म० सचलमिश्रकृतः। परन्तु ग्रन्थमध्ये स्मृतितत्त्वसमुच्चय इति नाम समुपलभ्यते। वस्तुतो ग्रन्थकारेण ग्रन्थनिर्माणसामग्री संगृहीता, परन्तु ग्रन्थरूपेण न सम्पादिता। तथापि एतस्योपयोगिता प्रामाणिकता च नितरां गरीयसी।

प्रणेता चास्य भवानीनाथापरनामको म० म० सचलमिश्रो हरिअम्मयवलिराजपुराख्य-मैथिलश्रोत्रियवंशं स्वजन्मनालञ्चकार। एतस्य समयः अष्टादशशवीय-शतब्द्या उत्तरार्धमिति मिथिलेश-प्रतापसिंह-समकालिकत्वान्निश्चीयते। राज्ञा प्रतापसिंहेन ससम्मानमयं जगतपुर-ग्रामसंघप्रदानेन सभाजितः। तदनन्तरं १७७६ ई० वर्षे महाराजो माधवसिंहः चनौर ग्राममस्मै प्रदत्तवान्, यत्र तत्स्थापितं मन्दिरमद्यत्वेपि विराजते। पुण्यपत्तनस्य राजा माधव राव

एनं जबलपुरमण्डलान्तर्गतो महँगवा सलैयाग्रामो प्रायच्छत्, यो तद्वंशजाना-मधिकारे वर्तमानशताब्द्या आरम्भं यावदासीदेव ।

तत्कालस्थेन भारतसर्वकारेणायं ससम्मानं न्यायालयीय-निर्णयार्थं धर्माधिकरणिकत्वेन कलिकातायां पाटलिपुत्रे च नियुक्तः। साम्प्रतमपि एतत्कृतो न्यायालयीय-निर्णयस्तत्र उपलभ्यते ।

अनेन गोवर्धनाचार्यकृताया आर्यासप्तशत्या व्याख्या रचिता, या एतत्प्र-पौत्रेण बी० ए० उपाधिधारिणा पाहीग्रामकृतवासेन केशीमिश्रेण दरभङ्गायां प्रकाशिता ।

म० म० सचलमिश्रस्य पिता यारेति प्रसिद्धो रघुदेवमिश्रः, पितामहो वैदिको देवानन्दः, पुत्रौ दत्त-खगदत्तौ, सोदरश्च राधानयनर्द्विशतीकारो वैयाकरणो मोहनः आसन् । अयं हि रघुदेवमिश्रो विरुदावलीकाराद् रघुदेवाद् भिन्नः। यतो हि शाहजहां - सम्राजो विरुदावलीकारो रघुदेवो विश्वेश्वरमिश्रस्य पुत्रो हरिअम्मय-मङरओनावंशोद्भवोऽस्मात् प्राचीनतरो दीपग्रामकृतवास आसीत्। म० म० सचलमिश्रस्तु सरिसव-समीपस्थ-पाहीग्राममधिवसतिस्म, यत्र साम्प्रतमपि तद्वंशजा निवसन्त्येव । तेषु एतत्प्रपौत्राणां पौत्र प्रभृतयः प्रो० श्रीसदन-मिश्र-श्रीमोहनजीमिश्र-श्री शचीनाथमिश्रादयो विद्यमानाः सन्ति । म० म० सचलमिश्रस्य पौत्री मुरलीमिश्रो महाराजस्य छत्रसिंहस्य दौहित्र आसीत्। मुरलीमिश्रस्य दौहित्रो महावैयाकरणो दीनबन्धुझा आसीत् । तस्य च दौहित्रः प्रस्तुतपङ्क्तिलेखकोऽस्ति ।

का० सिं० द० संस्कृत विश्वविद्यालयीयशोधपत्रिकायां विश्वमनीषायां १९८१ ई० वर्षे ५/१ अङ्के प्रचीनहस्तलेखाधारेण म० म० सचलमिश्रलिखिता "दत्तकव्यवस्था" तत्सामयिक-विंशत्यधिकपण्डितकृतसम्मतिका प्रकाशिता। तत्र स्मृतिदीपिकाकारस्य उमापतेः, विद्याकरसहस्रककर्तुर्विद्याकरस्य, कृत्य-सारसमुच्चयकर्त्तुः अमृतनाथस्य, कृत्यसागरकर्त्तुः रत्नपाणिशर्मणश्च सम्मतिभिः सह बहूनां सम्मति र्निर्दिष्टा। एते विद्वांसः म० म० सचलमिश्रस्य समकालिका । सेयं व्यवस्था प्रस्तूयतेः—

## दत्तकव्यवस्था

"पत्युरभावे तस्यानुमत्याऽननुमत्या वा स्त्रीकर्त्तृकं दत्तकपुत्रग्रहणं भवितुमर्हति 'माता पिता वा दद्यातां यमद्भिः पुत्रमापदि। सदृशं प्रीतिसंयुक्तं स ज्ञेयो दत्त्रिमः सुत' इति विष्णुवचने वाशब्दान्मात्रभावे पितैव दद्यात्, पित्रभावे मातैवोभयसत्त्वे तूभावपीति मदनव्याख्यानात्, दानग्रहणयोश्च समशीलत्वात् न स्त्री-पुत्रं दद्यात्प्रतिगृह्णीयाद्वान्यत्रानुज्ञानाद्भर्त्तुरिति वसिष्ठवचनस्य पत्यौ सति स्त्रियाः पत्यननुमत्या दानग्रहणादावनधिकारः, पत्यभावे त्वधिकार एवेति रुद्रधर-व्याख्यानाच्च।

यत्तु वैदिकमन्त्रसाध्यहोमवति पुत्रप्रतिगृहे स्त्रीशूद्रयोरनधिकारात् दत्तकः पुत्रो न सिद्धयतीति मतं तदप्यपास्तं, समन्त्रहोमस्तु प्रतिनिधिब्राह्मणद्वारा कार्यः, ब्राह्मणं दक्षिणादिभिरित्यन्तवचनात् 'उपवासो व्रतं होमं तीर्थयात्राव्रतादिकम्, विप्रैःसम्पादितं यस्य सम्पन्नं तस्य तत्फलमितिपराशरवचनात्, अमन्त्रस्य तु शूद्रस्य विप्रा मन्त्रेण गृह्णन्ति इति वराहपुराणवचनाच्च, स्त्रीशूद्राश्च सधर्माण इति वसिष्ठवचनात्।

एवं व्याहृत्यादिहोमं विनापि स्त्रीकर्त्तृकं पुत्रग्रहणं बहुतरग्रन्थकारसम्मतमतम् एव, यथा गर्भाधानादित्रयसंस्कारमन्तरेण जनितः पुत्रोऽसंस्कृतक्षेत्रप्रभवत्वाद्विगुणोऽपि पुत्र एव। एवं दत्तके व्याहृतिहोमादीनां, क्षेत्रजे घृताद्यङ्गानामितिकर्त्तव्यतानामभावेऽपि पुत्रत्वं सिद्धयत्येवेति वर्द्धमानोपाध्यायादिबहुतर-निबन्धृलिखनेभ्यस्तथावगमादिति सभ्यानभ्यावेदयति **सचल मिश्रः। शुभम्।।**

(१) सम्मतिरत्र श्री उमापतेः। (२) सम्मतिरत्र श्री बालहशर्मणः। (३) सम्मतिरत्र श्री विद्याकरशर्मणः। (४) सम्मतोऽयमर्थः श्रीजगद्धरशर्मणः। (५) सम्मतिरत्र श्री श्रीदत्तशर्मणः। (६) सम्मतिरत्र श्री ननू ठक्कुरस्य। (७) सम्मतिरत्र श्री ईशदत्तशर्मणः। (८) सम्मतिरत्र श्री अमृतनाथशर्मणः। (९) सम्मतोऽयमर्थः श्री वेचनस्य। (१०) सम्मतिरत्र श्री कृष्णदत्तस्य। (११) सम्मतिरत्र श्रीलीलाङ्गदशर्मणः। (१२) सम्मतोऽयमर्थः श्रीएकनाथशर्मणः। (१३) सम्मतिरत्र श्री रत्नपाणिशर्मणः। (१४) श्रीरत्नपतेरनुमतिः। (१५)

सम्मतिरत्र श्रीभवानीदत्तस्य। (१६) सम्मतिरत्र श्रीयदुनन्दनस्य। (१७) सम्मतिरत्र श्रीमाणिकशर्मणः। (१८) सम्मतोऽयमर्थः श्रीभवनाथशर्मणः। (१९) सम्मतिरत्र श्रीमदुमानाथस्य। (२०) सम्मतिरत्र श्रीरामनाथशर्मणः।"

[ २१, २२ सङ्ख्यके हस्ताक्षरे लुप्तवर्णतयाऽपाठ्ये ]।

म० म० सचलमिश्रकृतोयं स्मृतितत्त्वसमुच्चयो विदुषां पुरत उपस्थाप्यते। अत्र सम्पादने ममानवधानजातास्त्रुटीः समाधास्यन्ति निर्मत्सरधीधनाः सुधीजना इत्याशास्ते

विदुषां वशंवदः

स्नातकोत्तरव्याकरण-भाषाविज्ञानविभागः — श्री शशिनाथझा शर्मा

का० सिं० द० संस्कृतविश्वविद्यालयः, दरभङ्गा — १२।१२।१९८४ ई०



म० म० सचलमिश्रकृतः

# ★ स्मृतितत्त्वसमुच्चयः ★

श्री गणेशाय नमः ॥

## १-प्रातःकृत्यम्

**विष्णुः**—श्रुतिस्मृत्युदितो धर्मः साधुभिर्यश्च सेवितः ।
तमाचारं निषेवेत धर्मकामो जितेन्द्रियः ॥

**मनुः**—ब्राह्मे मुहूर्त्ते बुध्येत धर्मार्थौ चानुचिन्तयेत् ।
कायक्लेशांश्च तन्मूलान् वेदतत्त्वार्थमेव च ॥

**महाभारते**—प्रक्षाल्य पादौ हस्तौ च मुखञ्च सुसमाहितः ।
उत्थाय नेत्रे प्रक्षाल्य शुचि र्भूत्वा समाहितः ॥

**मनुः**—मूत्रोच्चारसमुत्सर्गं दिवा कुर्यादुदङ्मुखः ।
दक्षिणाभिमुखो रात्रौ सन्ध्ययोश्च यथा दिवा ॥

**स्मृतिसमुच्चये**--पुरीषे मैथुने चैव प्रस्रावे दन्तधावने ।
स्नाने भोजनकाले च मौनं षट्सु विधीयते ॥

**स्मृतिसारे** - शौचपात्रे न भोक्तव्यं शौचस्यान्ते द्विजैर्भुवि ।
अनाचान्तः प्रमुच्येत तज्जलं रुधिरायते ॥

## २-अथ दन्तधावनम्

**मनुः** प्रतिपद्दर्शषष्ठीषु नवम्यां रविवासरे ।
दन्तकाष्ठन्तु यो भक्षेद्हत्यासप्तमङ्कुलम् ॥
प्रतिपद्दर्श षष्ठी च नवमी द्वादशी तथा ।
दन्तानाङ्काष्ठसंयोगं यत्नेन परिवर्ज्जयेत् ॥

**यमः**—श्राद्धे जन्मदिने चैव विवाहेऽजीर्णदोषतः ।
व्रते चैवोपवासे च वर्ज्जयेद्दन्तधावनम् ।।

**गोभिलः**– गुडाक्य - तालहिन्तालङ्केतकञ्चबृहद्द्वयम् ।
खर्ज्जूरं नारिकेलञ्च सप्तैते तृणराजकाः ।।
तृणराज-समोपेतं यः कुर्याद्दन्तधावनम् ।
नरश्चाण्डालयोनिः स्याद् यावद्गङ्गान्न पश्यति ।।

**कार्त्तिकमाहात्म्ये**-उदिते तु दिवानाथे यः कुर्याद्दन्तधावनम् ।
स निर्लज्जः कथं ब्रूयात् पूजयामि जनार्द्दनम् ।।
द्वादशाङ्गुलं विप्राणां क्षत्रियाणां नवाङ्गुलम् ।
अष्टाङ्गुलन्तु वैश्यानां शूद्राणां सप्तसङ्ख्यया ।।
अन्तरप्रभावानाञ्च षडङ्गुलमुदाहृतम् ।
चतुरङ्गुलमानेन नारीणां विधिरुच्यते ।।
प्रतिपद्दर्शषष्ठीषु नवमीषु चतुर्दशी ।
अष्टमी पूर्णिमा चैव रवि संक्रमणे तथा ।।
अभावे दन्तकाष्ठानां प्रतिषिद्धे दिने तथा ।
जल-द्वादश गण्डूषै र्मुखशुद्धिर्विधीयते ।।

## ३-अथ क्षौरम्

**ज्योतिश्शास्त्रे** - क्षौरे प्राणहरा त्याज्या मघा मैत्रञ्चरोहिणी ।
उत्तरा कृत्तिका, वारा भानु-भौम-शनैश्चराः ।।

**स्मृतिसारे**—रवौ दुःखं, सुखं सोमे, कुजे मृत्यु,र्बुधे जयः ।
मानं हन्ति गुरोर्वारे, शुक्रे शुक्रक्षयो भवेत् ।।
शनौ च सर्वदोषःस्यान्नराणां क्षौरकर्मणि ।
षष्ठ्यष्टमो पञ्चदशी उभे पक्षो चतुर्दशी ।।
अत्र सन्निहितं पापं तैले मांसे भगे क्षुरे ।।
न स्नातभुक्तोत्कट-भूषितानामभ्यङ्गयात्रासमरोन्मुखानाम् ।
क्षौरं विदध्यान्निशि सन्ध्ययोर्वा जिजीविषूणान्नकमे न चाह्नि ।।

षष्ठयान्तैलमनायस्यामष्टम्यां पिशितन्तथा ।
क्षुरकर्म चतुर्दश्यान्तथा पर्वणि मैथुनम् ।।

## ४-अथ तैलनिषेधः

**ज्योतिश्शास्त्रे**-षष्ठीषु तैलम्पलमष्टमीषु क्षौरक्रियाञ्चैव चतुर्दशीषु ।
स्त्री सेवनन्न सृकलासु पुंसामायुःक्षयार्थं मुनयो वदन्ति ।।

कुहू-पूर्णेन्दु - सङ्क्रान्ति चतुर्द्दश्यष्टमीषु च ।
नरश्चाण्डलयोनिः स्यात्तैलस्त्री-मांस-सेवनात् ।।
तैलाभ्यङ्गे रवौ तापः, सोमे शोभा, कुजे मृतिः ।
बुधे धनं, गुरौ हानिः, शुक्रे दुःखं, शनौ सुखम् ।।
रवौ पुष्पं, गुरौ दूर्वा, भूमिपुत्रे च मृत्तिका ।
शुक्रे च चमसन्दद्यात्तैलदोषो न विद्यते ।।
व्यतीपाते च सङ्क्रान्तौ ग्रहणे चन्द्रसूर्ययोः ।
तैलाभ्यङ्गे न दोषः स्याद् यदि स्यात्सूरनन्दनः ।।
न तिथिर्न्न च नक्षत्रं न योगो न च पर्व च ।
तैलाभ्यङ्गम्प्रकुर्वीत सम्प्राप्ते सौरिवासरे ।।
शनैश्चरदिने प्राप्ते तैलाभ्यङ्गङ्करोति यः ।
नापमृत्यु - भयन्तस्य यावदन्योर्क्कनन्दनः ।।
सार्षपङ्गन्धतैलञ्च यत्तैलं पुष्पवासितम् ।
अन्यद्रव्ययुतं तैलं न प्रदुष्येत्कदाचन ।।
विवाहादौ तथाशौचे तैलं घृतसमन्वितम् ।
तैलाभ्यङ्गनिषेधे तिलतैलं निषिध्यते ।।

**कौर्मे** – तैलाभ्यक्तोऽथवा कुर्य्याद्यदि मूत्रपुरीषके ।
अहोरात्रेण शुद्धयेत श्मश्रुकर्मणि मैथुने ।।

**वशिष्ठः**—मस्तकाभ्यक्ततैलेन क्वचिन्नोद्वर्त्तयेत्तनुम् ।
पुण्यहानिरलक्ष्मीः स्यात्तस्मात्तत्परिवर्ज्जयेत् ।।

स्मृतिसारे — नन्दासु नाभ्यङ्गमुपाचरेच्च क्षौरञ्च रिक्तासु जयासु मांसम् ।
पूर्णासु योषित्परिवर्ज्जनीया भद्रासु सर्वाणि सदैव कुर्यात् ॥
नाभ्यङ्गमर्क्के न च भूमिपुत्रे क्षौरञ्च शुक्रे च कुजे च मांसम् ।
बुधे च योषां न समाचरेयुः शेषेषु सर्वाणि समाचरेयुः ॥
हस्तेषु चित्राश्रवणेषु तैलं क्षौरं विशाखा-प्रतिपत्सु वर्ज्यम् ।
मूले मृगे भाद्रपदे च मांसं योषिन्मघासूत्तरकृत्तिकासु ॥

## ५ - अथ स्नानम्

दक्षः---उषस्युषसि यत्स्नानं सन्ध्ययायामुदितेऽपि वा ।
प्राजापत्येन तत्तुल्यं महापातकनाशनम् ॥

गौडीये--चतस्रो घटिकाः प्रातररुणोदय उच्यते ।
यतीनां स्नानकालोयं गङ्गाम्भस्सदृशः स्मृतः ॥

दक्षसंवर्त्तौ —गुणा दशस्नानपरस्य साधो, रूपञ्च तेजश्च बलञ्च वीर्यम् ।
आयुष्यमारोग्यमलोलुपत्वं, दुस्स्वप्ननाशञ्च तपश्च मेधाः ॥

गौतमः---शिवलिङ्गसमीपस्थं यत्तोयं पुरतः स्थितम् ।
शिवगङ्गेति विज्ञेयं तत्र स्नातो दिवं व्रजेत् ॥
न जलन्ताडयेत्पद्भ्यां न जलेषु मलं त्यजेत् ।
न मलं क्षालयेत्तीर्थेऽशुद्धो न विशेज्जलम् ॥

स्मृतिसारे---अवधूनोति यः केशान् स्नात्वा प्रस्रवतो द्विजः ।
आचामेद्वा जलस्थोऽपि स बाह्यः पितृदैवतैः ॥
पाणिभ्याम्मार्ज्जयेद्गात्रं स्तानवस्त्रेण वा पुनः ।
शुनोच्छिष्टम्भवेद्गात्रं पुनः स्नानेन शुद्ध्यति ॥
यदि स्नातो द्विजस्तीर्थादग्रहीतकमण्डलुः ।
आज्ञानाद्गहमागच्छेत्स्नानन्तस्य वृथा भवेत् ॥
सकृद्धौतं स्त्रिया धौतं शूद्रधौतं तथैव च ।
अधौतन्तद्विजानीयाच्छुष्कन्दक्षिणपल्लवे: ॥

काकविष्ठासमायुक्तम् अवधौतञ्च यद्भवेत् ।
रजकादाहृतं यच्च न तद्वस्त्रं भवेच्छुचिः ।।
अकृत्रिमदशम्वस्त्रं प्रशस्तं सर्वकर्मसु ।
अकृत्रिमदशा ज्ञेया सिद्धा वपनकर्माणी ।।
कम्बले पट्टसूत्रे च नीलीदोषो न विद्यते ।

मनुः—नाभौ च वामकुक्षौ च पृष्ठे चैव यथाक्रमम् ।
वस्त्रप्रावरणं यत्स्यात्तत्त्रिकक्षमुदाहृतम् ।।

स्मृतिः—संयोजितदशं वाऽपि ह्यर्द्धं च्छिन्नदशन्तथा ।
नित्ये नैमित्तिके वाऽपि यत्नेन परिवर्ज्जयेत् ।।

## ६-अथ षट्कर्माणि

पराशरः - सन्ध्या स्नानं जपो होमो देवतानाञ्च पूजनम् ।
आतिथ्य-वैश्वदेवञ्च षट्कर्माणि दिने दिने ।।
षट्कर्माभिरतो नित्यन्देवताऽतिथिपूजकः ।
हुतशेषन्तु भुञ्जानो ब्राह्मणो नावसीदति ।।

## ७-अथ सन्ध्या

सङ्क्रान्तौ पक्षयोरन्ते द्वादश्यां श्राद्धवासरे ।
सायंसन्ध्यान्न कुर्वीत कुर्वंस्तु पितृहाभवेत् ।।
दशभिर्ज्जन्मजनितं शतेन च पराकृतम् ।
त्रिजन्मजं सहस्रेण गायत्री हन्ति किल्विषम् ।।

स्मृतिसारे-कृत्वोत्तानौ करौ प्रातः सायञ्चाधोमुखौ करौ ।
कुब्जौ करौ तु मध्याह्ने कृत्वा जपमुदाहरेत् ।।
प्रातर्नाभौ करौ कृत्वा मध्याह्ने चोरसि स्थितौ ।
सायङ्करौ तु मध्याह्ने जपस्यैष विधिः स्मृतः ।।
मध्यमादिद्वयं पर्व जपकाले विवर्ज्जयेत् ।

एतन्मेरुं विजानीयाद् दूषितं ब्रह्मणा स्वयम् ॥
अनामिकाया मध्ये तु मध्यमाधः क्रमेण तु ।
तर्ज्जन्यादि जपान्ते च ह्यक्षमाला करेस्थिता ॥
अङ्गुल्यग्रे च यज्जप्तं यज्जप्तं मेरुलङ्घने ।
असङ्ख्यातञ्च यज्जप्तं तत्सर्बन्निष्फलं भवेत् ॥

गोभिलः - कदाचिदपि नो विद्वान् गायत्रीमुदके जपेत् ।
गायत्र्यग्निमुखी प्रोक्ता तस्मादुत्थाय ताञ्जपेत् ॥

## ८-अथ तिलकम्

विष्णुः-- यागो दानं तपो होमः स्वाध्याय पितृतर्पणम् ।
भस्मीभवति तत्सर्वं मूर्ध्नि पुण्ड्रं विना कृतम् ॥

स्मृतिसारे - अशुचिर्वाऽप्यनाचारो मनसा पापमाचरन् ।
शुचिरेव भवेन्नित्यं मूर्ध्नि पुण्ड्रे कृते द्विजः ॥
श्राद्धे होमे जपे दाने वैश्वदेवे शिवार्च्चने ।
कृतत्रिपुण्ड्रः पूतात्मा सर्वम्भवति चाक्षयम् ॥
त्रिपुण्ड्रं सुरविप्राणां वर्त्तुलं नृप वैश्ययोः ।
ऊर्द्धपुण्ड्रन्तु शूद्राणामन्येषामूर्द्ध्वं पुण्ड्रयोः ॥
न चोर्ध्वन्धारयेद्भूतिन्न तिर्यग्गोपिचन्दनम् ।
तिर्यगूर्ध्वञ्च वृत्तञ्च धारयेच्चन्दनादिकम् ॥
भूत-प्रेत-पिशाचा ये दुर्वारावैरिणो ग्रहाः ।
निरर्थका भवन्त्येते तिलकं वीक्ष्य तत्क्षणात् ॥

चतुर्णां वर्णानां तिलकविशेषो--

मार्गमाहात्म्ये - ब्रह्मन्द्वादश पुण्ड्राणि ब्राह्मणः सततं वहेत् ॥
चत्वारि भूभृतां पुत्रः पुण्ड्राणि द्वे विशाम्पतेः ॥
एकं पुण्ड्रञ्च नारीणां शूद्राणाञ्च विधीयते ।
ललाटे उदरे चैव वक्षे वै कण्ठकूपके ॥

कुक्षौ वाह्वोः कन्द्धरे च पार्श्वे पृष्ठे तथैव च ।
तिलकं द्वादश प्रोक्तं ब्राह्मणस्य सदाऽनघ ॥
ललाटे हृदये बह्वोः क्षत्री पुण्ड्राणि धारयेत् ।
ललाटे हृदये वैश्यो भाले वै शूद्रयोषितौ ॥
अनामिका शान्तिदा स्यान्मध्यमायु करी भवेत् ।
अङ्गुष्ठः पुष्टिदः प्रोक्तस्तर्जनी मुक्तिदायिनी ॥
जाह्नवीतीरसम्भूतां मृदं मूर्ध्ना तु धारयेत् ।
हरिनामाङ्कितां सौम्यां तमोघ्नीं पापनाशिनीम् ॥

**द्वारकामाहात्म्ये**-द्वारावत्युद्भवं गोपीचन्दनञ्चोर्ध्वपुण्ड्रके ।
धारयेन्नित्यमेवं हि पापं हन्ति न संशयः ॥

**गालवः**—अभ्यङ्गे सूतके चैव विवाहे पुत्रजन्मनि ।
माङ्गल्येषु च सर्वेषु न धार्यङ्गोपिचन्दनम् ॥

**ब्राह्मे**—पर्वताग्रे नदीतीरे मायाक्षेत्रे विशेषतः ।
सिन्धुतीरे च वल्मीके तुलसीमूलमाश्रिते ॥
मृद एतास्तु संग्राह्या वर्ज्जयेत्त्वन्यमृत्तिकाः ।
वर्त्तिदीपकृतिं वाऽपि बिल्वपत्राकृतिन्तथा ॥
पद्मस्य मुकुलाकारन्तथैव कुमुदस्य च ।
मत्स्य-कूर्माकृतिं वाऽपि शङ्खाकारमतः परम् ॥
कृष्णायुधाङ्कित-तनुर्यत्करोति तदक्षयमितिपद्मपुराणम् ।

## ६-अथ कुशमहिमा

**ब्रह्मे**—स्नाने दाने जपे होमे स्वाध्याये पितृतर्पणे ।
पवित्रञ्च करं कुर्यात्सौवर्णं राजतन्तथा ॥
कुशपूतं पिबेत्तोयंकुशपूतमुपस्पृशेत् ।
कुशाग्रमिश्रितन्तोयं सोमपानन्दिने दिने ॥

**वसिष्ठः**--कुशपाणिस्सदा तिष्ठेद् ब्राह्मणो दम्भव ज्जतः ।
स नित्यं हन्ति पापानि तूलराशिमिवाऽनलः ॥

कुशमूले स्थितो ब्रह्मा कुशमध्ये जनार्दनः ।
कुशाग्रे शङ्करश्चैव तस्मान्नित्यं प्रधारयेत् ॥

**मार्कण्डेयपुराणे**-विना दर्भेण यत्स्नानं यच्च दानं विनोदकम् ।
असङ्ख्यातञ्च यज्जप्तं तत्सर्वं निष्फलं भवेत् ॥

**मनुः**—सपवित्रेण हस्तेन कुर्यादाचमनक्रियाम् ।
नोच्छिष्टन्तत्पवित्रन्तु भुक्तोच्छिष्टन्तु वर्ज्जयेत् ॥

**पराशरः**--स्नाने तर्पणकाले च श्राद्धशेषे तथैव च ।
विकिरे पिण्डदाने च तेषां त्यागो विधीयते ॥

**हारीतः**—जातमात्रो भवेद्दर्भः प्रसूतस्तु कुशः स्मृतः ।
समूलपत्रः कृतपश्छिन्नाग्रस्तृणमुच्यते ॥
तर्पणे ते नियोक्तव्या अलाभेऽन्यान्नियोजयेत् ॥

**आपस्तम्बः**-कौशेयन्धारयेद्विप्रः पवित्रं दक्षिणे करे ।
भुञ्जानस्तु विशेषेण ह्यन्नदोषैर्न्न लिप्यते ॥

## १०-कुशोत्पाटनविधिः

**ब्राह्मे**--विरञ्चिना सहोत्पन्नः परमेष्ठि-निसर्गजः ।
नुद सर्वाणि पापानि मम स्वस्तिकरो भव ॥
मासि भाद्रपदे चैव या कुहूः परिकीर्त्तिता ।
तद्दिने कुशमुत्पाट्य सर्वकार्येषु शस्यते ॥

**हारीतः**—मासे नभस्यमावास्या तस्यान्दर्भोच्चयो मतः ॥
अयातयामास्ते दर्भा विनियोज्याः पुनः पुनः ॥

**स्मृतिसारे** - शुचौ देशे शुचिर्भूत्वा यश्च पूर्वोत्तरामुखः ।
हूं फट्कारेण मन्त्रेण सकृत्स्पृष्ट्वा समुद्धरेत् ॥

**शङ्खः**---कुशाभावे द्विजश्रेष्ठ काशैः कुर्वीत यत्नतः ।
तर्पणादीनि कर्माणि काशाः कुशसमाः स्मृताः ॥

**यमः**—कुशाः काशास्तथा दूर्वा यवा व्रीहय एव च ।
वल्वजाः पुण्डरीकाणि सप्तधा वर्हिरुच्यते ॥

## ११-अथ तर्पणम्

स्मृतिसारे - प्रहराभ्यन्तरे पुत्रः पित्रे दद्याज्जलाञ्जलीम् ।
मधुनैव रसा तुल्याद्धर्षस्सञ्जायते पितुः ॥
द्वितीये तु पयो ज्ञेय तृतीये जलमेव च ।
चतुर्थे शोणितं ज्ञेयमिति धर्मविदो विदुः ॥

## १२-अथ तिलतर्पणनिषेधः

विष्णु --भार्गवे भानुवारे च जन्मर्क्षे च तथा दिने ।
दूर्वास्नानन्न कुर्वीत तिलैः कृष्णैस्तु तर्पणम् ॥
रवौ शुक्रे त्रयोदश्यां सप्तम्यान्निशि सन्ध्ययोः ।
तर्पणं यत्तिलैर्मिश्रं तज्जलं रुधिरम्भवेत् ॥

स्मृतिसारोद्धारे-तीर्थे तिथिविशेषे च प्रेतपक्षे तथैव च ।
निषिद्धेऽपि दिने कुर्यात्तर्पणन्तिलमिश्रितम् ॥
रोमकूपेषु संस्थाप्य यस्तिलैस्तर्पयेत्पितॄन् ।
तर्पितास्तेन ते सर्वे रुधिरेण मलेन च ॥
कुशहीनन्तु यत्कर्म तिलहीनन्तु तर्पणम् ।
भोजनं दक्षिणाहीनं तत्सर्वं निष्फलम्भवेत् ॥

स्मृतिसारे—अविदित्वा तु यः कुर्याद्याजनाध्यापनं जपम् ।
होममन्तर्ज्जलादीनि तस्य चाल्पादिकम्भवेत् ॥

द्वैतपरिशिष्टे - तिलानामप्यलाभे तु सुवर्णरजतान्वितम् ।
तदलाभे निषिञ्चेत्तु दर्भैर्मन्त्रेण चाप्यथ ॥
सौवर्ण-राजताभ्याञ्च खड्गेणौदुम्बरेण वा ।
दत्तमक्षयतां याति पितॄणाञ्च तिलोदकम् ॥

याज्ञवल्क्यः—नास्तिक्यभावाद्यः स्नातो न तर्पयति वै पितॄन् ।
पिबन्ति देहनिःस्रावं पितरोऽस्य जलार्थिनः ॥

## १३-अथाभिवादनविधि:

मनु: - अजाकर्णेन विद्वांसं करसम्पुटकेन च ।
मुखन्तु चैकहस्तेन कनिष्ठन्नाभिवादयेत् ॥
अभिवादनशीलस्य नित्यं वृद्धोपसेविन: ।
चत्वार्यस्य प्रवर्द्धन्ते ह्यायु: प्रज्ञा यशो बलम् ॥
ततोऽभिवादयेद् बृद्धान् श्रोत्रियाँश्च ततो गुरून् ।
सायम्प्रातश्च होतव्यं न जह्यादात्मनो हितम् ॥
पाखण्डं पतितं व्रात्यं महापातकिनं नरम् ।
विकर्मस्थं कृतघ्नञ्च नाभिवाद्येत्कथञ्चन ॥

विष्णु:—कृताभिवादनं विप्रो य: पुनर्न्नाऽभिवादयेत् ।
श्मशाने जायते वृक्ष: काककङ्कोपसेवित: ॥

अङ्गिरा:—समित्पुष्पकुशानम्बुवहन्तञ्च सुरार्च्चनम ।
जपं होमञ्च कुर्वाणं नाभिवाद्येत्तु वै द्विजान् ॥

गौतम:--देवार्च्चने भोजने च कुश-पुष्प प्रधारणे ।
जपे होमे जलस्थे च विण्मूत्रादि विसर्ज्जने ॥
राज्ञस्समीपे दाने च श्राद्धकाले विशेषत: ।
उच्छिष्टे समरे वाऽपि नाऽभिवाद्येत्कथञ्चन ॥

## १४-अथ पात्राणि

दारुपात्र-मृत्तिकापात्र-पद्मपत्र-पलाशपत्र - ताम्र - रौप्य - सुवर्णपात्राणि अर्घस्नान-नैवेद्य-बलि धूपादिकार्येषूत्तरोत्तरं प्रशस्तानि। विष्णोर्न्नैवेद्ये सुवर्णादिपात्रादपि ताम्रपात्रमधिकं प्रशस्तम् ।

स्नाने तु सौवर्ण-राजत - कुम्भाभावे ताम्रकुम्भ इति विशेष: । सर्वत्र भग्नं पात्रं निषिद्धम् । ताम्र-सुवर्ण-रौप्यान्मुक्ता-स्फाटिक शङ्ख-शुक्तिपात्राणि भग्नान्यपि प्रशस्तानि।

अत्र पात्रप्रमाणमाह--

**देवीपुराणे** - षट्त्रिंशदङ्गुलं पात्रमुत्तमं परिकीर्त्तितम् ।
मध्यमन्तु त्रिभागोनं कनिष्ठं द्वादशाङ्गुलम् ॥
वस्वङ्गुलविहीनन्तु न पात्रङ्कारयेत्क्वाचित् ।
नानाविचित्ररूपाणि पुण्डरीकाकृतीनि च ॥
शङ्खनीलोत्पलाभानि पत्राणि परिकल्पयेत् ।
रत्नादिखचितान्येव काञ्चीमूलयुतानि च ॥
यथाशोभ यथालाभं पात्राणि परिकल्पयेत् ।

**शङ्खः** - स्नानमाचमनन्दानं देवता-पितृतर्पणम् ॥
शूद्रोदकैर्न्न कुर्वीत तथा मेघाद्विनिःसृतैः ॥

**छन्दोगपरिशिष्टे**-सौवर्णी राजती वाऽपि शैलरत्नमयी तथा ।
वीतिकाधातुयुक्ता वा ताम्रकांस्यमयी तथा ॥
शुभदारुमयी वाऽपि देवतार्च्चा प्रशस्यते ।

इति सामान्यतः सर्वदेवतानां च मूर्त्तयः ॥

अङ्गुष्ठपर्व्वादारभ्य वितस्तिर्य्यावदेव तु ।
गृहेषु प्रतिमा कार्या नाधिका शस्यते बुधैः ॥

**सर्वमङ्गला प्रतिमाधिकारे देवीपुराणे** –

सप्ताङ्गुलात्समारभ्य यावच्च द्वादशाङ्गुलम् ।
गृहेष्वर्च्चा समाख्याता प्रासादे चाधिका शुभा ।
ऊर्ध्वास्थिता गृहे कार्या सदा देवी चतुर्भुजा ॥
अन्यथा तु न कर्त्तव्या कृता भयकरी सदा ॥
तथा चाष्टभुजा कार्या प्रासादे वा तथा गृहे ।
ऊर्ध्वस्थिता गृहे घोरा रौद्री वाऽपि नरेश्वर ॥

ऊर्ध्ववस्थिताऽष्टभुजा चतुर्भुजायाः प्रशस्तत्वात् । रुद्राक्षं शिवलिङ्गञ्च स्थूलं स्थूलं प्रशस्यते । स्मृत्यन्तरे—

विना भस्म त्रिपुण्ड्रेन विना रुद्राक्षमालया ।
विना मालूरपत्रेण पूजितोऽपि न पूजित: ॥

## १५-अथ शालग्राम-विचार:

आपस्तम्ब. - शालग्रामास्समा: पूज्या विषमा न कदाचन ।
समेषु द्वितयन्नेष्टं विषमेष्वेक एव हि ॥

पाद्मे—गृहे लिङ्गद्वयन्नाच्चर्यं शालग्रामशिलान्तथा ।
द्वे चक्रे द्वारकायास्तु नाच्चर्यं सूर्यद्वयन्तथा ॥

बृहन्नारदीये—स्त्रीणामनुपनीतानां शूद्राणाञ्च जनेश्वर ।
स्पर्शने नाधिकारोऽस्ति विष्णो र्वा शङ्करस्य च ॥
दीक्षायुक्तैस्तथा शूद्रं मंत्रपानविवर्ज्जितैः ।
कर्त्तव्यं ब्राह्मणद्वारा शालग्रामशिलार्चनम् ॥
शालग्रामशिलां वाऽपि चक्राङ्कितशिलान्तथा ।
ब्राह्मण: पूजयेन्नित्यं क्षत्रियादिर्न्न पूजयेत् ॥

पूजने दोषमाह आपस्तम्ब—

प्राणवोच्चारणाच्चैव शालग्रामशिलार्च्चनात् ।
ब्राह्मणीगमनाच्चैव शूद्रश्चाण्डालतां व्रजेत् ॥
ब्राह्मणस्यैव पूज्योऽहं शुचेरप्यशुचेरपि ।
स्त्रीशूद्रकरसंस्पर्शाद्वज्रादपि निहन्यते ॥

शालग्रामशिलाभावे--

अप्स्वग्नौ हृदयेष्वपि स्थण्डिले प्रतिमासु च ।
षडेतेषु हरेस्सम्यगर्च्चनं मुनिभि: स्मृतम् ॥
कुड्ये लेख्ये च य: कश्चित्पट्टे कश्चित्तु मानव: ।
पूजयेद्यदि मे चक्रं मम तेजोंऽशसम्भवम् ॥

छन्दोगपरिशिष्टे—यस्तु सम्पूजयेन्नित्यं नरसिंहं नरेश्वर ।
स स्वर्गमोक्षभागी स्यान्नात्र कार्या विचारणा ॥

तस्मादेकमना भूत्वा जावज्जीवप्रतिज्ञया।
अच्चंनान्नरसिंहस्य सम्प्राप्नोत्यभिवाञ्छितम् ॥

अत्र सर्वदेवानां पूजा यस्य या देवता इष्टा तद्भावनयेति विशेषः। शालग्रामशिला भग्ना निषिद्धा स्मृत्यन्तरे--

गृहेऽग्निदग्धा भग्नाश्च नार्च्याः पूज्या वसुन्धरे।
एतेषाम्पूजनान्नित्यमुद्वेगं प्राप्नुयाद् गृही ॥

सर्वासु प्रतिमासु इदम्। शालग्रामशिला भग्नाऽपि सचक्रा पूज्या इति पुराणे कथिता--

शाग्रामशिला भग्ना पूजनीया सचक्रकाल
खण्डिता स्फुटिता वाऽपि शालग्रामशिला शुभा ॥
नाक्षतैरर्च्चयेद्विष्णुं न शिवं शङ्खवारिणा ॥

मात्स्ये—अलङ्कारन्तु यो दद्याद्विप्रायाथ सुराय वा।
स गच्छेद्वारुणं लोकं नानाभरणभूषितः ॥

यमः—अनुलिप्य दिवं याति दैवतञ्चन्दनादिना।
देवतापुष्पदानेन जायते श्रीसमन्वितः ॥
दिष्ट्या गतिमवाप्नोति यश्च धूपप्रदो नरः॥

## १६-अथ घण्टामाहात्म्यम्

स्नानार्च्चनक्रियाकाले घण्टानादङ्करोति यः।
पुरतो मम देवस्य तस्य पुण्यफलं श्रृणु ॥
वर्षकोटिसहस्राणि वर्षकोटिशतानि च।
वसते मामके लोके अप्सरोगणसेवितः॥
सर्ववाद्यमयी घण्टा सर्वदा मम वल्लभा।
वादनाल्लभते पुण्यं यज्ञकोटिशतोद्भवम् ॥
सर्ववाद्यमयी घण्टा सर्वदेवमयी यतः।
तस्मा सर्वप्रयत्नेन घण्टानादन्तु कारयेत् ॥

प्रीतो भवामि सततं घण्टानादेन पुत्रक ।
नागारिचिह्नितां घण्टां रथाङ्गेन समन्विताम् ॥

## १७-शङ्खमाहात्म्यम्

वादनात्कुरुते नाशं जन्ममृत्युभयस्य च ।
अथवा पूजयेच्छङ्खं पाञ्चजन्यं मम प्रियम् ॥
यस्य सम्पूजनाद्ब्रह्मन्नानन्दः परमो मम ।
शङ्खस्य पूजने वत्स मन्त्राण्येतान्युदीरयेत् ॥
"त्वम्पुरा सागरोत्पन्नो विष्णुना विधृतः करे ।
निर्मितस्सर्वदेवैस्तु पाञ्चजन्य नमोस्तु ते ॥
तव नादेन ये भूता वित्रसन्ति मुदा सुराः ।
शशाङ्कायुतदीप्ताभ पाञ्चजन्य नमोस्तु ते ॥
गर्भादेवारिनारीणां विलयन्ते सहस्रधा ।
तव नादेन पाताले पाञ्चजन्य नमोस्तु ते" ॥
दर्शनेनैव शङ्खस्य किं पुनः स्पर्शने कृते ।
विलयं यान्ति पापानि हिमवद्भास्करोदये ॥

याज्ञवल्क्यः—वीणावादनतत्त्वज्ञः श्रुतिजातिविशारदः ।
तालज्ञश्चाप्रयासेन मोक्षमार्गन्नियच्छति ॥

## १८-अथ होमः

स्मृतिसारे—कृतदारो न तिष्ठेत क्षणमप्यग्निना विना ।
तिष्ठन्भवेद्द्विजो ब्रात्यस्तथा च पतितो भवेत ॥
होमे मुद्रात्रयी कार्या मृगी हंसी च शूकरी ।
मुद्राहीनन्तु यद्धोमन्तत्सर्वं निष्फलं भवेत् ॥
शूकरी करसङ्कोची मृगी मुक्तकनिष्ठिका ।
मुक्तकनिष्ठतर्ज्जन्या हंसीमुद्रा प्रकीर्तिता ।
अभिचारादिषु प्रेते शूकरी कथिता बुधैः ।
बहुशुष्केन्धने वह्नौ सुसमिद्धे हुताशने ॥

विधूमे लेलिहाने च होतव्यङ्कर्मसिद्धये ॥
अप्रबुद्धे सधूमे वा जुहुयाद्यो हुताशने ।
यजमानो भवेदन्धः सपुत्रश्चैव निश्चितम् ॥
अधोवक्त्रश्चोर्ध्वपादः प्राङ्मुखो हव्यवाहनः ।
तिष्ठते च स्वभावेन आहुतिः कस्य दीयते ॥
सपवित्रेण हस्तेन वह्नौ कुर्यात्प्रदक्षिणम् ।
हव्यवाट् सलिलं दृष्ट्वा विभीतस्संमुखो भवेत् ॥
ओं सूर्याय नमः प्रातः, सायञ्चैवाग्नये नमः ।
जुहुयात्सर्पिषाक्तन्तु तैलक्षारविवर्जितम् ॥
दध्यक्तं पायसाक्तञ्च तदभावेऽम्बुनाऽपि वा॥
अनग्नि ब्रह्मचारी च प्रदद्यादुदकं यतिः ।
गजाऽश्व-रथदानानि हेमभारशतानि च ॥
गवाङ्कोटिसहस्राणि तुल्यानि प्रातराहुतेः ॥
ब्रह्मा विष्णुः शिवः सूर्यो गो-विप्र-पितृ-देवताः ।
अग्निहोतृगृहे सन्ति व्रततीर्थतपांसि च ॥
घृतस्य वार्षिको होमः क्षीरस्य मधुनस्तथा ।
शुक्तिमात्राहुतिर्दध्नः प्रसृतिः पयसस्तथा ॥
पश्चाच्च सर्ववृक्षाणां लाजानाम्मुष्टिसम्मितम् ।
खण्डत्रयन्तु मूलानां फलानाञ्च प्रमाणतः ॥
ग्रासानशेषमन्नानां सूक्ष्माणां पञ्च होमयेत् ।
इक्ष्वष्टपर्विकामानं लतानामङ्गुलद्वयम् ॥
पुष्पं पत्रन्तु मानेन समिधो द्वादशाङ्गुलम् ।
चन्द्रचन्दन - काश्मीर - कस्तूरी - यक्षकर्दमम् ॥
कलायसम्मितानेतान् गुग्गुलुम्बदरास्थिवत् ।
न सूर्पेण धमेदग्निं न वस्त्रेण न पाणिना ॥
मुखेनाग्निं समिन्धीयान्मुखादग्निरजायत ॥
वस्त्रेण तु भवेद्व्याधिः सूर्पेण धननाशनम् ।
पाणिना मृत्युमाप्नोति कर्मसिद्धिर्मुखेन च ॥
श्वेता च प्रथमा जिह्वा रक्ता चैव द्वितीयका ।
तृतीया च भवेत्कृष्णा चतुर्थी पिङ्गला स्मृता ॥

पञ्चमी नीलवर्णा च षष्ठी च कपिला स्मृता ।
सप्तमी तादृशी ज्ञेया क्षीरधारा यथा भवेत् ॥
जिह्वारूपन्न जानाति हुतञ्चैवाहुतं भवेत् ॥
कालातीतन्तु यः कुर्याच्छाङ्गहोमञ्जपादिकम् ।
वृथा भवति तत्सर्वममृतेन विषं यथा ॥
यत्नेनापि कृतं सर्वं श्रद्धाहीनं वृथा भवेत् ॥
यत्क्रोधयुक्तो जपति यज्जुहोति यदर्च्चति ।
सर्वं क्षरत्यदान्तस्य भिन्नकुम्भादिवोदकम् ॥
काले कर्म प्रकुर्वीत काले तिष्ठन्ति देवताः ।
वरमेकाहुतिः काले नाकाले कोटिसम्मिता ॥

## १९-अथ वैश्वदेवप्रकरणम्

वृद्धावादौ क्षये चान्ते मध्ये जुह्वति पार्वणे ।
एकोद्दिष्टे तथा चान्ते वैश्वदेवो विधीयते ॥
यस्मिन्नग्नौ पचेदन्नं तस्मिन् होमो विधीयते ।
वैश्वदेवं स्वगृह्योक्तं साग्नेरेव द्विजन्मनः ॥
निरग्नीनामतो वक्ष्ये पाकशुद्ध्यर्थहेतवे ।
श्राद्धेऽह्नि श्राद्धशेषेण वैश्वदेवं समापयेत् ॥

इति वचनाच्छ्राद्धशेषान्नेन पृथक्पाकेनेत्यन्ये ।

यदा श्राद्धं पितुः कश्चित्कर्त्तुमिच्छत्यनग्निमान् ।
वैश्वदेवन्तदा कुर्यान्निवृत्ते श्राद्धकर्मणि ॥

**स्मृतिसारे**—न चुल्यां नायसे पात्रे न भूमौ नच कर्पटे ।
कुण्डे वा स्थण्डिले वाऽपि वैश्वदेवो विधीयते ॥
अन्नम्पर्युषितञ्चैव परान्नं पायसन्तथा ।
दग्धमन्नन्तथा क्षारं वैश्वदेवे विवर्ज्जयेत् ॥
कृत्वा श्राद्धं महाबाहो ब्राह्मणाँश्च विसृज्य च ।
वैश्वदेवादिकङ्कर्म ततः कुर्यान्नराधिप ॥

**स्मृतिसारे—**पितृशेषन्तु यो दद्याद्धरये परमात्मने ।
रेतोधः पितरस्तस्य यावदाहुतसम्प्लवः ॥
विष्णो र्न्निवेदितान्नेन यष्टव्यं देवतान्तरम् ।
पितृभ्यश्चाऽपि तद्देयं तदाऽऽनन्त्याय कल्प्यते ॥
अकृत्वा वैश्वदेवन्तु भुञ्जते ये द्विजाधमाः ।
सर्वे ते नरकं यान्ति काकयोनिं व्रजन्ति च ॥
अतिथिन्तत्र सम्प्राप्तं पूजयेत्स्वागतादिना ।
तदाऽऽसनप्रदानेन पादप्रक्षालनेन च ॥
श्रद्धया चान्नदानेन प्रियप्रश्नोत्तरेण च ।
जघनस्वादपानेन प्रीतिमुत्पादयेद्गृही ॥
अतिथिर्यस्य भग्नाशो गृहात्प्रतिनिवर्त्तते ।
पितरस्तस्य नाश्नन्ति दशवर्षाणि पञ्च च ॥

## २०-अथ श्राद्धप्रकरणम्

नानानिबन्धलिखितानि नानादेशीयस्मृतिसाधारणानि लिख्यन्ते--

**स्मृत्यन्तरे** दन्तधावनमभ्यङ्गन्नखलोमादि - कृन्तनम् ।
कर्त्ता चैव तु पूर्वेद्यु र्भोक्ता चैव परेऽहनि ॥

एकोद्दिष्टस्वरूपे—

**याज्ञवल्क्यः—**एकोद्दिष्टं दैवहीनमेकार्घ्यैकपवित्रकम् ।
आवाहनाग्नौ करणं रहितं ह्यपसव्यवत् ॥

**स्मृतिसारोद्धारे -**ग्रहयज्ञे वृषोत्सर्गे प्रतिष्ठा दैविकी तथा ।
शूद्राणामपि मन्त्रैश्च शेषेष्वेव नमोनमः ॥

विघ्नादि प्रतिरुद्ध श्राद्धादौ-

**स्मृतिसारे -**एकोद्दिष्टे तु सम्प्राप्ते यदि विघ्नं प्रजायते ।
मासे तस्मिन्तिथौ तस्यां श्राद्धङ्कुर्यात्प्रयत्नतः ॥
**राजमार्त्तण्डे-**श्राद्धविघ्ने समुत्पन्ने मृते रजसि सूतके ।
एकादश्यां प्रकुर्वीत कृष्णपक्षे विशेषतः ॥

शुचीभूतेन दातव्यं या तिथिः प्रतिपद्यते ।
सा तिथिस्तस्य कर्त्तव्या न त्वन्या वै कदाचन ॥

**गौतमः** –श्राद्धवारे त्वविज्ञाते तन्मासगतवासरे ।
एकादश्यान्तु कर्त्तव्यं तदभावे कुहूतिथौ ॥

**स्मृतिसारे** - सूतकादिनिमित्तेन क्षयाहो लुप्यते यदि ।
एकादश्यान्तु कृष्णायां दिने वा पितृसेविते ॥
सूतकान्तरितं श्राद्धं प्रमादादकृतन्तु यत् ।
तद्दिने द्वादशाहे वा तस्य मासस्य पर्वणि ॥

**प्रभासखण्डे** - मृतस्याहो न जानाति मासं वाऽपि कथञ्चन ।
तेषाङ्कार्यण्यमायां वा माघेवाऽप्यथ मार्गके ॥

**सन्देहेत्वाह** - गतस्य न भवेद्वार्त्ता यस्य द्वादशवार्षिकी ।
प्रेतावधारणन्तस्य कर्त्तव्यं सुतबान्धवैः ॥

**प्रचेताः** - अविज्ञाते मृते त्वमावास्यायां श्रवणदिवसे वा ।

## अमृतस्य श्राद्धकरणे

**हेमाद्रौ** - अमृते मृतमाकर्ण्य कृतं यस्यौर्द्धदेहिकम् ।
प्रायश्चित्तमसौ स्मार्त्तं कृत्वाग्नीनादधीत च ॥

जीवन् यदि समागच्छेद्घृतकुम्भे निमज्य तम् ।
उद्धृत्य स्नापयित्वास्य जातकर्मादि कारयेत् ॥

**स्मृतिसारे** - नैकः श्राद्धद्वयं कुर्यादनिमित्ते कदाचन ।
निमित्ते सति कर्त्तव्यं विनावृद्धि हालयम् ।

आहवेषु तथोत्पाते एकाहे ये मृता जनाः ।
एकपाकेन कुर्वीति पण्डास्तेषां पृथक् पृथक् ॥

**स्मृतिसारे** - महालये गयाश्राद्धे वृद्धौ त्वन्वष्टकासु च ।
नवदैवतमत्रस्याच्छेषं षट्पौरुषं विदुः ॥

श्राद्धकल्पलतायाम्-

प्रेतसंस्कारकर्माणि सपिण्डीकरणन्तथा ।
यथाकाले तु कार्याणि नान्यथा मुच्यते हि सः ।।
गयायां पिण्डदानेन प्रेतत्वं नश्यति ध्रुवम् ।
अन्यथा पतितो ज्ञेयः सर्वधर्मवहिष्कृतः ।।

## गुरुपातके वर्ज्याणि

**स्मृतिसारे** - तीर्थस्नानम्महादानं यच्चान्यच्छुभकर्म च ।
अब्दमेकन्न कुर्वीत महागुरु-निपातने ।।

## मातृपितृभार्याशौचम्

पितुर्वर्षमशौचं स्यात्षण्मासं मातुरेव हि ।
मासत्रयन्तु भार्यायां तदर्द्धं भ्रातृपुत्रयोः ।।
**मार्कण्डेये**-स्त्रीणामप्येकमेवैतदेकोद्दिष्टमुदाहृतम् ।
सपिण्डीकरणन्तासां पुत्राभावे न विद्यते ।।

## अनुपनीतश्राद्धम्

**यमः** - कृतचूडानुपेतस्तु पित्रोः श्राद्धं समाचरेत् ।
उदाहरन्स्वधाकारं नच वेदाक्षराण्यसौ ।।

## अधिमासे श्राद्धम्

**वसिष्ठः** - श्राद्धीयाहनि सम्प्राप्ते ह्यधिमासो भवेद्यदि ।
मासद्वयेऽपि कुर्वीत श्राद्धमेव न मुह्यति ।।
**स्मृतिसारे** - स्नानन्दानन्तथा तीर्थं श्राद्धञ्च पितृतर्पणम् ।
सपिण्डीकरणादूर्ध्वं कुर्यात्पुत्रस्सदैव हि ।।

कल्पलतायाम् -

अस्थिक्षेपङ्गयाश्राद्धं श्राद्धञ्चापरपक्षकम् ।
प्रथमेऽब्दे न कुर्वीत कृते पितृसपिण्डने ।।

अस्यापवादमाह -

अस्थिक्षेपङ्क्याश्राद्धं श्राद्धञ्चापरपाक्षिकम् ।
प्रथमेऽब्देऽपि कुर्वीत यदि स्याद्भुक्तिमान्सुतः ॥

**महाभारते**—प्रहरौ घटिका न्यूनौ प्रहरौ घटिकाधिकौ ।
स कालः कुतुपो ज्ञेयः पितॄणां श्राद्धमक्षयम् ॥

## अथ नित्यश्राद्धम्

**मार्कण्डेयः**—कुर्यादहरहः श्राद्धमन्नाद्येनोदकेन वा ।
पितॄनुदिश्य विप्रांस्तु भोजयेद्विप्रमेव च ॥

**मात्स्ये**—नित्यं तावत्प्रवक्ष्यामि अर्घावाहनवर्ज्जितम् ।
अदैवं तद्विजानीयात्पार्वणन्तद्धि कीर्त्तितम् ॥

**व्यासः**—नित्यश्राद्धेषु गन्धाद्यैर्द्विजानभ्यर्च्य शक्तितः ।
सर्वान् पितृगणान्सम्यक् सदैवोद्दिश्य भोजयेत् ।
आवाहनं स्वधाकारं पिण्डाग्नौ करणादिकम् ॥
ब्रह्मचर्यादिनियमो विश्वेदेवास्तथैव च ॥
नित्यश्राद्धे त्यजेदेतान् भोज्यमन्नं प्रकल्पयेत् ।
दत्त्वा तु दक्षिणां शक्त्या नमस्कारैर्विसर्जयेत् ॥

## अथाभ्युदयिकम्

**स्मृतिसारे**- वृद्धौ श्राद्धत्रयङ्कुर्यात्तत्रादौ मातृकं स्मृतम् ।
द्वितीये पैतृकञ्चैव मातामहतृतीयकम ॥
आमश्राद्धम्प्रकर्त्तव्यं वृद्धौ नान्दीमुखे तथा ।
पाकञ्चारु बहिःशालं सोदनम्बदरन्दधि ॥
नान्दीमुखेषु कर्त्तव्यमामश्राद्धं सदा मुने ।
दधिबदराक्षतं मिश्रं पिण्डनिर्वपन विना ॥

**भविष्ये**—पिण्डनिर्वपनङ्कुर्यान्नवा कुर्याद्विचक्षणः ।
वृद्धिश्राद्धे महाबाहो कुलधर्मानवेक्ष्य च ॥

छागलेय:—अग्नौ करणमर्घं वा वाहनञ्चावनेजने ।
पिण्डश्राद्धे प्रकुर्वीत पिण्डदाने विवर्ज्जयेत् ॥

मनु:—गो-विप्रमजमग्निं वा प्राशयेदप्सु वा क्षिपेत् ॥

स्मृतिसारे—वृद्धौ विवादे यज्ञे च मातृणां कुलपूजने ।
नव-दैवतकं श्राद्धं स्वयम्भूरब्रवीत्पुरा ॥

## १२--अथ रजस्वला

मनु:—शुद्धा भर्त्तुश्चतुर्थेऽह्नि स्नानेन स्त्री रजस्वला ।
दैवकर्मणि पैत्र्ये च पञ्चमेऽहनि शुद्धयति ॥

अत्रि:—रजस्वला यदि स्नात्वा पुनरेव रजस्वला ।
अष्टादशदिनादर्वाक् शुचित्वं नैव विद्यते ॥

पराशर: --स्नाने नैमित्तिके प्राप्ते नारी यदि रजस्वला ।
पात्रान्तरेण तोयेन स्नानं कृत्वा व्रतञ्चरेत् ॥

समुच्चये--आतुरस्नान उत्पन्ने दशकृत्वस्त्वनातुर: ।
स्नात्वा स्नात्वा स्पृशेदेनन्तत: शुद्धयेत आतुर: ॥

## २२--कन्यादानम्

याज्ञवल्क्य:--यत्नात्परीक्षित: पुंस्त्वे युवा धीमान् जनप्रिय: ।
एतैरेव गुणैर्युक्त: सवर्ण: श्रोत्रियो वर: ॥
उदकेन वचञ्चौरङ्कन्याया: पतिरुच्यते ।
पाणिग्रहणसंस्कारात्पतित्वं सप्तमे पदे ॥

एवं वाग्दानप्रभृति आसप्तमपदाद्दोषदर्शने मरणादौ वा कन्यामन्यस्मै दद्यात् ।

कात्यायन:--हीनस्य कुलशीलाभ्यां हृता कन्या न दोषभाक् ।
न मन्त्रं कारणन्तत्र नच कन्यानृतं भवेत् ॥

समाकृष्य तु ताङ्कन्यां बलादक्षतयोनिकीम् ।
पुनर्गुणवते दद्यादिति शातातपोऽब्रवीत् ॥

**मनु:**--कन्यायां दत्तशुल्कायां म्रियेत यदि शुल्कद: ।
देवराय प्रदातव्या यदि कन्याऽनुमन्यते ॥

**कात्यायन:**--अनेकेभ्योऽपि दत्तायामनूढ़ायान्तु तत्रवै ।
यदागताश्च, सर्वेषां लभते आदिमस्तु ताम् ॥

## २३ - अथानध्याया:

**उशना:**---अयने विषुवे चैव शयने बोधने हरे: ।
अनध्यायं प्रकुर्वीत मन्वादिषु युगादिषु ॥
अश्वयुक् शुक्लनवमी द्वादशी कार्त्तिकस्य च ।
चैत्रमासे तृतीया च तथा भाद्रपदस्य च ॥
आषाढ़स्यापि दशमी माघमासस्य सप्तमी ।
फाल्गुनस्य च मासस्य तथाऽऽषाढ़ी च पूर्णिमा ॥
कार्त्तिकी फाल्गुनी चैत्री ज्यैष्ठी पञ्चदशी सिता ।
एते मन्वादय: प्रोक्ता: दत्तस्याक्षयकारका: ॥
वैशाखमासस्य तथा तृतीया नवम्यसौ कार्त्तिकशुक्लपक्षे ।
नभस्यमासस्य च कृष्णपक्षे त्रयोदशी पञ्चदशी च माघे ॥
एते युगादय: प्रोक्ता: स्वाध्यायं वर्ज्जयेद बुध: ।
महापुण्यप्रदा ह्येते दत्तस्याक्षयकारका: ॥

**याज्ञवल्क्य:**---त्र्यहं प्रेतेष्वनध्याय: शिष्यर्त्विग्गुरुबन्द्धषु ।
उपाकमर्मणि चोत्सर्गे स्वशाखाश्रोत्रिये तथा ॥

**मनु:**--अनध्यायस्य पूर्वेद्यु रनध्यायो भवेन्निशि ।
यदि तत्र समे कुर्यात्स्वाध्यायं परारात्रयो: ॥

**गोभिल:**-- रात्रौ यामद्वयादर्वाग्यदि पश्येत्त्रयोदशी ।
प्रदोषस्स तु विज्ञेयस्सर्वशब्दविवर्जित: ॥

षष्ठी च द्वादशी चैव अर्द्धरात्रोननाडिका ।
प्रदोषमपि कुर्वीत तृतीया नवनाडिका ॥

मनुः--अष्टम्याञ्च चतुर्दश्यां पौर्णमास्याङ्क हूतिथौ ।
सन्ध्ययो र्गर्ज्जितेमेघे प्रतिपद्यपि सवदा ॥
अनध्यायम्प्रकुर्वीत भूकम्पोल्का - निपातने ।
सोम-सूर्यग्रहेचैव त्रिरात्रं वर्ज्जयेद् बुधः ॥
मार्ज्जार-मूषक-श्वान पशु-मण्डूक शूकरैः ।
कृतेऽन्तरे त्वहोरात्रं शुक्रपाते तथैव च ॥

याज्ञवल्क्यः -पञ्चदश्याञ्चतुर्दश्यामष्टम्यां राहुसूतके ।
ऋतु सन्धिषु भुक्त्वा वा श्राद्धेषु प्रतिगृह्य च ॥
पशुमण्डूकनकुलश्वाहिमार्ज्जार-मूषकैः ।
कृतेऽन्तरे त्वहोरात्रं शुक्रपाते तथोच्छ्रये ।-

विष्णुः श्मशाने शूद्रसम्पर्के चाण्डालानाञ्च दर्शने ।
रोदने व्याकुले देशे जपस्थाने महालये ॥
धावतः पूतिगन्धे च शिष्टे च गृहमागते ।
खरोष्ट्रयोस्समीपे च स्वाध्यायं वर्ज्जयेद्बुधः ॥

याज्ञवल्क्यः -श्वक्रोष्ट्रगर्दभोलूकसमवाणार्त्त - निःस्वने ।
अमेध्यशरशूद्रान्त्यश्मशानपतितान्तिके ॥
देशेऽशुचिरात्मनि च विद्युत्स्तनितसप्लवे ।
भुक्त्वार्द्रपाणिरम्भोरुरर्द्धरात्रेऽतिमारुतैः ॥
पांशुवर्षे दिशान्दाहे सन्ध्या-नीहार-भीतिषु ।
धावतः पूतिगन्धे च शिष्टे च गृहमागते ॥
खरोष्ट्रयान-हस्त्यश्वनौवृक्षेरिणरोहने ।
सप्ततान्तदनध्यायानेतांस्तात्कालिकान् विदुः ॥

मनुः -अष्टमी गुरुहन्त्री च शिष्यं हन्ति चतुर्दशी ।
अमावास्या द्वयोर्हन्ति प्रतिपत्परिवर्ज्जयेत् ॥

**यम:**—अष्टमी हन्त्युपाध्यायं शिष्यं हन्ति चतुर्दशी ।
हन्ति पञ्चदशी मेधां तस्मात्पर्वाणि वर्ज्जयेत् ।।

खञ्जमूकादीनां विशेष:...

**पारिजाते** ब्राह्मण्यां ब्राह्मणाज्जातो ब्रह्मण इति विश्रुतिः ।
तस्मात्खज्ज - बधिर -कुब्ज वामन - पङ्गुषु ।
दद्रु गद्ग्रहरोगार्त्त - शुष्काङ्गविकलाङ्गिषु ।।
मत्तोन्मत्तेषु मूकेषु शयनस्थेऽतिरिन्द्रिये ।
ध्वस्तावस्थेषु चैतेषु संस्काराःस्यु र्यथोचितम् ।।
संस्कारमन्त्रहोमादीन् करोत्याचार्य एव च ।
उपनेयाश्च विधिवदाचार्यस्य समीपत: ।।

## २४-आचार्यकर्त्तव्यं गृहस्थधर्मे

**मनुः**—अनेन विधिना नित्यं पञ्चयज्ञान्न हापयेत् ।
द्वितीयमायुषो भागं कृतदारो गृहे वसेत् ।।

**याज्ञवल्क्य:**—वाक्पाणिपादचापल्यं वर्ज्जयेच्चातिभोजनम् ।
अतिथिं श्रोत्रियं तृप्तमासीमान्तमनुव्रजेत् ।।

**मनु:**—एवं गृहाश्रमे स्थित्वा विधिवत्स्नातको द्विजः ।
वने वसेत्तु नियतो यथावद्विजितेन्द्रियः ।।

## २५-ब्राह्मणप्रशसा

**याज्ञवल्क्य:** - तपस्तप्त्वाऽसृजद् ब्रह्मा ब्राह्मणान् वेदगुप्तये ।
तृप्त्यर्थं पितृदेवानां धर्मसंरक्षणाय च ।।

**मनु:** सर्वस्य प्रभवो विप्राः श्रुताऽध्ययनशीलिन. ।
तेभ्यः क्रियापरा: श्रेष्ठास्तेभ्योऽप्यध्यात्मवित्तमाः ।।

**याज्ञवल्क्य:** - न विद्यया केवलया तपसा वाऽपि पात्रताम् ।
यत्र वृत्तमिमे चोभे तद्धि पात्रं प्रकीर्तितम् ।।

पराशरः–दुःशीलोऽपि द्विजः पूज्यो नतु शूद्रो जितेन्द्रियः।
कः परित्यज्य गान्दोग्ध्रीं दुहेत् ष्ठीलवतीं खरीम् ॥
याज्ञवल्क्यः - विद्यातपोभ्यां हीनेन नतु ग्राह्यः प्रतिग्रहः।
गृह्णन् प्रदातारमधो नयत्यात्मानमेव च ॥
दातव्यं प्रत्यहं पात्रे निमित्तेषु विशेषतः।
याचितेनापि दातव्यं श्रद्धापूतं स्वशक्तितः ॥

## २६-अथ दक्षिणाप्रमाणम्

व्यासः - सुवर्णम्परमन्दानं सुवर्णं दक्षिणा परा।
सर्वेषामेवदानानां सुवर्णन्दक्षिणेष्यते ॥
हेमाद्रौ - हेमद्रव्यतृतीयांशं दक्षिणाम्परिकल्पयेत् ॥
अनुक्तदक्षिणादाने दशांशो वाऽपि शक्तितः ॥

भविष्ये - दाने निष्कशतम्पार्थ दक्षिणाविधिरुत्तमः।
मध्यमस्तु तदर्धेन तदर्द्धेनाधमः स्मृतः ॥

## २७-अथ दानम्

मनुः - गवामङ्गेषु तिष्ठन्ति भुवनानि चतुर्दश।
यस्मात्तस्माद्दिवं मे स्यादिह लोके परत्र च ॥
याज्ञवल्क्य.--हेमशृङ्गी रौप्यखुरैस्सुशीला वस्त्रसंयुता।
सकांस्यदोहा दातव्या क्षीरिणी गौस्सदक्षिणा ॥
"यस्मात्त्वं पृथिवी सर्वा धेनो वै कृष्णसन्निभे।
सर्वमृत्युहरा नित्यमतश्शान्तिम्प्रयच्छ मे ॥
विष्णोर्वक्षसि या लक्ष्मी या लक्ष्मी धनदस्य च।
या लक्ष्मीः सर्वभूतानां सा धेनुर्वरदा भव ॥
गावो मेऽग्रतस्सन्तु गावो मे सन्तु पृष्ठतः।
गावो मे हृदये सन्तु गवाम्मध्ये वसाम्यहम् ॥
जन्मादावेव सङ्कल्पं विस्मृतं भविता मम।
तस्य सन्तरणार्थाय कल्पधेनुन्ददाम्यहम् ॥

ऋणञ्च सर्वदारिद्रं यदृणञ्च मया कृतम् ।
ऋणधेनुं प्रदास्यामि प्रीयतां मे जनार्द्दनः ॥
मोक्षन्देहि जगन्नाथ मोक्षन्देहि जनार्द्दन ।
मोक्षन्देहि हृषीकेश केशवः प्रीयताम्मम ॥
कृष्णरूप द्विजश्रेष्ठ भूदेवपङ्क्तिपावन! ।
सदक्षिणा मया दत्ता कृष्णा वैतरणी च गौः ॥"

इति पञ्चधेनुदानमन्त्रः।

"देव देव जगन्नाथ शङ्खचक्रगदाधर ।
सुरासुरगणैर्वन्द्य मम शान्तिम्प्रयच्छतु ॥"

--वासुदेवप्रतिमादानमन्त्रः।

"शिवशक्त्यात्मकं यस्माज्जगदेतच्चराचरम् ।
तव दानेन मेऽवश्यं पृथिव्यां स्यात्सुनिश्चलम्"

—महादेवदानमन्त्रः।

"महाक्लेशनिरासेन चक्राद्यैरुपलक्षितम् ।
शालग्रामप्रदानेन मम सन्तु मनोरथः ॥"

—शालग्रामप्रदानमन्त्र

ब्रह्माण्डे—महिषीं वस्त्र संयुक्तां सुशीलाञ्च पयस्विनीम् ।
रक्तवस्त्रेण पुष्पेण ह्यलङ्कृत्य प्रयत्नतः ॥
श्रोत्रियाय सुशान्ताय शीलाचारयुताय च ।
रक्तवस्त्रैरलङ्कृत्य दत्वा मृत्युञ्जयेन्नरः ॥
"कालमृत्यु स्वरूपा सा महिषी रक्तभूषणा ।
पुच्छदेशे प्रदेया सा मम शान्तिम्प्रयच्छतु ॥"

--इति महिषीदानमन्त्रः।

"उच्चैःश्रवःकुलेजातो राज्ञां विजयकारकः ।
सूर्यवाहनसत्वस्थ मम शान्तिम्प्रयच्छतु ॥"

---इति अश्वदानमन्त्रः ।

बृहस्पतिः---गृहदानन्तु यः कुर्याद्गृहोपकरणानि च ।
बन्द्धु·पुत्रयुतो राजा महावित्तयुतो भवेत् ॥
"इदं गृहं गृहाण त्वं सर्वोपस्करसंयुतम् ।
तव विप्र प्रसादेन ममास्तु विहितं फलम् ॥"

सर्वेषामेव दानानामेकजन्मानुगं फलम् ।
हाटक-क्षिति-गो-विद्याः सप्तजन्मानुगं फलम् ॥
"हिरण्यगर्भ-गर्भस्थं हिमबीजं विभावसोः ।
अनन्तपुण्यफलदमतश्शान्तिम्प्रयच्छ मे ॥"

--इति हेमदानमन्त्रः ।

देव देव जगन्नाथ ! वाञ्छितार्थ फलप्रद ।
तिलम्प्रदास्यामि तव प्रसादात्सुस्थिरोह्यहम् ॥

--तिलदानमन्त्रः ।

धन्यङ्करोति दातारमिहलोके परत्र च ।
तस्मात्त्वमुच्यसे धान्यमतश्शान्तिम्प्रहच्छ मे ॥

--इति धान्यदानमन्त्रः ।

शीतवातोष्णसत्राणं लज्जाया हरणं परम् ।
देहालङ्करणं वस्त्रमतश्शान्तिम्प्रयच्छ मे ॥

इति वस्त्रदानमन्त्रः ।

"मोचयेन्मुच्यते पापादाजन्ममरणान्तिकात् ।
सर्वभूताश्रया भूमि र्वराहेण समुद्धृता ॥
अनन्तफलदा दातुरतश्शान्तिम्प्रयच्छ मे ॥"

—इति भूमिदानमन्त्रः ।

कात्यायनः---दद्यात्कृष्णाजिनं पुच्छे गाम्पुच्छे करिणं करे ।
केशरेषु तथैवाश्वं दासीं शिरसि दापयेत् ॥

**ब्रह्माण्डे**—अश्वत्थमेकं पिचुमर्दमेकं न्यग्रोधमेकं दश तिन्तिणीनाम् ।
जम्बूशतञ्चावरणन्तदर्द्धं कृत्वा नरः स्वर्गपुरम्प्रयाति ॥
भूमिदानेन ये लोका ये गोदानेन कीर्त्तिताः ।
ताँल्लोकानाप्नुयुर्म्मर्त्याः पादपानाञ्च रोपणे ॥

**शङ्खः**—पृथिव्यां यानि तीर्थानि वाजपेयादि यत्फलम् ।
तत्फलं लभते मर्त्यः पादपानाञ्च रोपणे ॥
मा ददस्वेति यो ब्रूयाद्गव्याग्नौ ब्राह्मणेषु च ।
तिर्य्यग्योनिशतङ्गत्वा चाण्डालेष्वभिजायते ॥
व्यतीपाते नमस्तेस्तु सोमसूर्यसुत प्रभो ।
यच्च दानादिकं किञ्चित्तदक्षयमिहास्तु मे ॥

-व्यतीपातदानमन्त्रः ।

**ब्राह्मे**—प्रवाहमवधिङ्कृत्वा यावद्धस्तचतुष्टयम् ।
तत्र न प्रतिगृह्णीयात्प्राणैः कण्ठगतैरपि ॥

**दानधर्मे**—भाद्रशुक्लचतुर्द्दश्यां यावदाक्रमते जलम् ।
तावद्गर्भं विजानीयात्तदूर्ध्वन्तीरमुच्यते ॥

**स्मृत्यन्तरे**—मनसा पात्रमुद्दिश्य जलमध्ये जलं क्षिपेत् ।
दाता तत्फलमाप्नोति प्रतिगाही न दोषभाक् ॥
तीर्थे सङ्कल्पितन्द्रव्यं यदन्यत्र प्रदीयते ।
दाता तत्फलमाप्नोति प्रतिग्राही न दोषभाक् ॥
काशी गङ्गा कुरुक्षेत्रम् प्रयागो नर्मदा तथा ।
महातीर्थानि षड्देशाः ग्रहीतु भयहेतवः ॥

**याज्ञवल्क्यः**—प्रतिग्रहसमर्थोऽपि नादत्ते यः प्रतिग्रहम् ।
ये लोका दानशीलानां स तानाप्नोति पुष्कलान् ॥

**ब्रह्माण्डे**—मास-पक्ष-तिथीनान्तु निमित्तानाञ्च सर्वशः ।
उल्लेखनमकुर्वाणो न तस्य फलभाग्भवेत् ॥

पराशरः—असङ्ख्यातञ्च यज्जप्तं यच्चदानं विनोदकम् ।
भोजनन्दक्षिणाहीनं तत्सर्वं निष्फलम्भवेत् ॥

मनुः—यज्ञोऽनृतेन क्षरति तपः क्षरति विस्मयात् ।
आयुर्विप्रापवादेन दानञ्च परिकीर्त्तनात् ॥

सङ्कल्पित द्रव्यस्य तदानीमदाने वृद्धिदोषः—

भारते—दक्षिणां विप्रमुद्दिश्य तत्कालञ्चेन्न दीयते ।
अहोरात्रे व्यतीते तु तद्दानन्द्विगुणम्भवेत् ॥
मासे शतगुणं प्रोक्तं द्विमासे तु सहस्रकम् ।
संवत्सरे व्यतीते तु स दाता नरकं व्रजेत् ॥
दात्रा न दीयते मूर्खो गृहीत्वा न च याचते ।
तावुभौ नरकं यातो दाता व्याधियुतो भवेत् ॥

## २८ - धर्ममहिमा

मनुः—न सुत हि सहायार्थं पिता माता च तिष्ठतः ।
न पुत्रदारा न ज्ञातिधर्मस्तिष्ठति केवलः ॥
एकः प्रजायते जन्तुरेक एव प्रलीयते ।
एकोऽत्र भुङ्क्ते सुकृतम् एकश्चाप्नोति दुष्कृतम् ॥

मनुः—अध्यापनमध्ययनं यजनं याजनन्तथा ।
दानं प्रतिग्रहश्चैव ब्राह्मणानामकल्पयत् ॥

## २९-अथाभक्ष्यनिर्णयः

स्मृतिसारे—उदकेन प्लुतञ्चान्नञ्चतुर्थाहादनन्तरम् ।
अन्नं मद्यैः समं ज्ञेयमभक्ष्यम्परिकीर्तितम् ॥
ताम्रपात्रस्थितं गव्यमभक्ष्यं परिकीर्त्तितम् ॥

बृहस्पतिः—कूष्माण्डं बृहतीञ्चैव पटोलम्मूलकन्तथा ।
श्रीफलन्निम्बपत्रञ्च तालञ्चाऽपि तथा शिवम् ॥

अलाबूं नारिकेलञ्च कुलत्थम्पूतिकान्तथा ।
तिलान्माषांश्च मांसञ्च प्रतिपदादिषु वर्ज्जयेत् ॥

भक्षणे दोषमाह -

कूष्माण्डे चार्थहानिः स्याद्बृहत्यान्न स्मरेद्धरिम् ।
शुचिबृद्धिः पटोले स्याद्धनहानिश्च मूलके ॥
कलङ्की जायते विल्वे तिर्यग्योनिश्च निम्बके ।
ताले शरीरनाशःस्यान्नारिकेले च मूर्खता ॥
तुम्बा गोमांसतुल्या स्यात्करम्बी गोबधात्मिका ।
कुलत्थे रोगबृद्धिःस्यात्पूतिका ब्रह्मघातिनी ॥
वार्ताक्यां सुतहानिःस्याच्चिररोगी च माषके ।
महापापकरं मांसं प्रतिपदादिषु वर्ज्जयेत् ।
रवावनुदिते स्नानं यः कुर्याद् ब्राह्मणोत्तमः ।
सर्वकर्माणि चाहन्ति पुनःस्नानेन भोजनम् ॥
सायम्प्रात र्मनुष्याणामशनं देवनिर्मितम् ।
नान्तरा भोजनङ्कार्यमग्निहोत्रसमो विधिः ॥

**महाभारते**— द्विर्भोजनन्न कर्त्तव्यं स्थिते सूर्ये द्विजातिभिः ।
निष्फलन्तद्भवेत्कर्म भुक्त्वा तु नरकं ब्रजेत् ॥
यः शूद्रेण समाहूतो भोजनंकुरुते द्विजः ।
सुरापी स हि विज्ञेयस्सर्वकर्म्मवहिष्कृतः ॥

**पराशरः** —अस्नात्वा नैव भुञ्जीत अजप्त्वाऽग्निमपूज्य च ।
पर्णपृष्ठे न भुञ्जीत रात्रौ दीपं विना तथा ॥

**जाबालः** - अस्नाताशी मलं भुंक्ते अजपी पूयशोणितम् ।
अहुत्वा च कृमिं भुंक्ते अदत्त्वा विषभोजनम् ।

**स्मृतिसारे** - पालाशे मध्यमे पात्रे स्वर्णे रौप्ये तथैव च ।
यः करोत्यशनन्तस्य प्राजापत्यम्विनिर्दिशेत् ॥

**मिताक्षरायाम्**—वटार्क्काऽश्वत्थपत्रेषु कुम्भीतिन्दुकपत्रयोः ।
कोविदारकदम्बेषु भुक्त्वा चान्द्रायणञ्चरेत् ॥
करे कर्पटके चैव ह्यायसे ताम्रभाजने ।
वटार्क्काऽश्वत्थपत्रेषु भुक्त्वा चान्द्रायणञ्चरेत् ॥

**स्मृतिसारे**—एक एव तु यो भुङ्क्ते विमले कांस्यभाजने ।
चत्वारि तस्य वर्द्धन्ते ह्यायुः प्रज्ञा यशो धनम् ॥

**प्रचेताः** - ताम्बूलाभ्यञ्जनञ्चैव कांस्यपात्रे च भोजनम् ।
यतिश्च ब्रह्मचारी च विधवा च विवर्ज्जयेत् ॥

**स्मृतिसमुच्चये** -त्चवारि खलु कार्याणि सन्ध्याकाले विवर्ज्जयेत् ।
आहारं मैथुनं निद्रां स्वाध्यायञ्च तथैव च ॥
आहाराज्जायते व्याधिः क्रूरगर्भश्च मैथुने ।
श्रियं हरति वै निद्रा स्वध्यायान्मरणं ध्रुवम् ॥

**वैद्यके**—याममध्ये न भोक्तव्यं यामयुग्मन्न लङ्घयेत् ।
यममध्ये रसोत्पत्ति र्युग्माऽतीते बलक्षयः ॥

महानिशायां भुञ्जानो नरकं प्रतिपद्यते । महानिशा-मध्यमप्रहर-द्वयम् ।

छन्दोगपरिशिष्टे--

वाला सुवासिनी बृद्धा गर्भिण्यातुरकन्यकाः ।
सम्भोज्यातिथिभृत्यांश्च दम्पत्योः शेषभोजनम् ॥

**अथवा**--गुरूनतिथिवालांश्च तर्पयेत्पूर्वमेव हि ।
आत्मानन्तर्पयेत्पश्चान्नियतो नान्यतः शुचिः ।

स्त्रीशूद्रन्तर्पयेत्पश्चादेष धर्मस्सनातनः ॥

**वसिष्ठः**--सुपूगं समपत्रञ्च चूर्णेन च समन्वितम् ।
अदत्त्वा द्विजदेवेभ्यस्ताम्बूलं वर्ज्जयेद्बुधः ॥

स्मृतिसङ्ग्रहे--अविधाय मुखे पर्णं पूगं खादति योनरः।
सप्तजन्मदरिद्रत्वमन्ते विष्णुं न संस्मरेत् ॥
सर्वं गङ्गासमं तोयं सर्वे व्याससमा द्विजाः।
सर्वं भूमिसमन्दानं ग्रहणे चन्द्रसूर्ययोः ॥

## ३०-एकादशीव्रतम्

व्रततिथिनिर्णये नारदः—

नागविद्धा तु या षष्ठी शिवविद्धा च सप्तमी।
दशम्येकादशीविद्धा हन्ति पुण्यं पुराकृतम् ॥

गोभिलः--अह्नस्तु पञ्चमे भागे विद्धा चेति प्रकीर्तिताः।
एकादश्यास्तु घटिका विद्धा चेति प्रकीर्तिताः ॥

नारदः - अश्वमेधसहस्राणि वाजपेयशतानि च ।
एकादश्युपवासस्य कलांनार्हन्ति षोडशीम् ॥

ब्रह्मवैवर्त्ते - इति विज्ञाय कुर्वीतारण्यमेकादशीव्रतम्।
विशेषनियमाशक्तोऽहोरात्रं भुक्तिवर्ज्जितः ॥

ब्राह्मे -रविवारेर्क्कसंयुक्तावसितैकादशीदिने ।
पारणञ्चोपवासञ्च न कुर्यात्पुत्रावान् गृही ॥

चमत्कारचिन्तामणौ—

इन्दुक्षयेऽवर्कसङ्क्रान्तावसितैकादशीदिने ।
व्यतीपाते कृते श्राद्धे पुत्री नोपवसेद्गृही ॥

वसिष्ठः -एकादशी यदा राम भौमार्क्कशनि वासरे।
निराहारा न कर्त्तव्या पुत्रदारधनक्षया ॥

स्मृतिसमुच्चये - सम्पूर्णैकादशी यत्र प्रभाते पुनरेव सा।
तत्रोपोष्या द्वितीया तु परतो द्वादशी यदि ।।
विद्धाप्येकादशी ग्राह्या परतो द्वादशी न चेत्।
शुद्धाप्येकादशी ग्राह्या परतो द्वादशी यदि ।।

भृगुः--एकादशी प्रबृद्धा चेच्छुक्ले कृष्णे विशेषतः।
उत्तरान्तु यतिः पूर्वास्वरसेन सदा गृही ॥
पुन प्रभातसमये घटिकैका यदा भवेत्।
तत्रोपवासो विहितो वनस्थस्य यतेस्तथा ॥
विधवायाश्च तत्रैव परतो द्वादशी न चेत्।

स्मृत्यन्तरे--मुहूर्त्तेनापि सयुक्ता दशम्येकादशी तु या।
नह्युपोष्या नर राजन् स्वर्गो धर्मश्च हीयते ॥
एकादशी द्वादशीमिश्रा परतोऽपि न वर्द्धते।
गृहिभिर्यतिभिश्चैव सैवोपोष्या सदा तिथिः ॥

कौर्मे · मुहूर्त्ता द्वादशी न स्यात्त्रयोदश्याम्महामुने।
उपोष्या दशमीविद्धा सर्वैरेकादशी तदा ॥

भविष्ये-एकादशीन्दशायुक्तां बर्द्धमाने विवर्ज्जयेत्।
पक्षहानौ स्थिते सैव लङ्घयेद्दशमीयुता ॥

गारुडे—द्वादशी शेषसंयुक्ता यदिस्यादरुणोदये।
सैवोपोष्या वैष्णवेन तद्दिनैकादशीव्रतम् ॥
तमात्मा सर्वभूतेषु निजाचारादविप्लुतः।
विष्णवर्पिताऽखिलाचारः स हि वैष्णव उच्यते ॥
पर्णमूले भवेद्व्याधि· पर्णाग्रे पापसम्भवः।
चूर्णपर्णं हरेदायुः शिरा बुद्धिविनाशिनी ॥
तस्मादग्रञ्च मूलञ्च शिराश्चैव विशेषतः।
चूर्णपर्णं वर्ज्जयित्वा ताम्बूलं खादये द्बुधः ॥

स्मृत्यन्तरे -- दशमी मिश्रिता पूर्वा द्वादश्यांयदि लुप्यते।
एकादशी तदा राजन्नुपवासः कथम्भवेत् ॥
शुद्धैव द्वादशी राजन् उपोष्या मोक्षकाङ्क्षिभिः।
सकामै गृहिभिः पूर्वा विद्धापीति सुनिश्चयः ॥

मनुः—एकादशी यदा नष्टा द्वादशीं समुपोषयेत्।
तत्र क्रतुशतं पुण्यं त्रयोदश्यान्तु पारणम् ॥

एकादशी द्वादशी वा रात्रिशेषे त्रयोदशी ।
त्रिस्पृशा नाम सा प्रोक्ता शतक्रतुफलप्रदा ॥
एकादशी सदा कार्या द्वादशीमिश्रिता बुधैः ।
क्षये दशान्विता कार्या बृद्धा चेद्द्वादशीब्रतम् ॥
द्वादशी बृद्धिगामिन्यान्तथा चैकादशीक्षये ।
द्वादशी केवलोपोष्या सदा भागवते मते ॥
मच्छये च मदुत्थाने मत्पार्श्वपरिवर्त्तने ॥
पयोमूलफलाहारी हृदि शल्यम्ममार्पयेत् ॥

## ३१-उपवासे नियमः

स्मृतिसमुच्चये-उपवासफलप्रेप्सुर्जह्याद्भुक्तचतुष्टयम् ।
पूर्वापरे तु सायाह्ने सायम्प्रातस्तु मध्यमे ॥

ब्राह्मे—असकृज्जलपानाच्च सकृत्ताम्बूलचर्वणात् ।
उपवासः प्रणश्येच्च दिवास्वापाच्च मैनथुात् ॥
जानूर्ध्वं क्षतजे जाते नित्यङ्कर्म न चाचरेत् ।
नैमित्तिकञ्च तदहः स्रवद्रक्तो न चाचरेत् ॥

स्मृत्यन्तरे—नाभेरूर्द्धमधो वाऽपि रुधिरं स्रवते यदा ।
तदहः कर्म कुर्वाणो नरकम्प्रतिपद्यते ॥

विष्णुः—बहुकालिकसङ्कल्पो गृहीतश्च पुरा यदि ।
सूतके मृतके चैव ब्रतं तेनैव दुष्यति ॥

स्मृत्यन्तरे-प्रारम्भो वरणँयज्ञे सङ्कल्पो देवसत्रयोः ।
नान्दीमुखं विवाहादौ श्राद्धे पाकपरिक्रिया ॥

कात्यायनः-पितृमातृभ्रतृपतिगुर्वर्थे च विशेषतः ।
उपवासं प्रकुर्वाणः पुण्यं शतगुणं लभेत् ॥
मातामहादीनुद्दिश्य एकादश्यामुपोषणम् ।
कृतन्तेन फलं विप्रास्समग्रं समवाप्नुयुः ॥

प्रभासखण्डे—भर्त्ता पुत्रः पुरोधा च भ्राता पत्नी सखापि च।
यात्रायां धर्मकार्येषु जायन्ते प्रतिहस्तकाः॥
एभिः कृतम्महादेवि स्वयमेव कृतम्भवेत्।
स्वयङ्कर्त्तुमशक्तश्चेत्कारयीत पुरोधसा॥

दशमी-द्वादश्योर्नियमः—

बृहस्पतिः—कांस्यं मासं मसूरान्नं चणकान् क्रोद्रवांस्तथा।
शाकं मधु परान्नञ्च पुनर्भोजनमैथुनम्।
वैष्णवव्रतकर्त्ता च दशम्यां दश वर्ज्जयेत्॥
शाकं मांसं मसूरञ्च पुनर्भोजनमैथुनम्।
द्यूत मद्यादि पानञ्च दशम्यां बैष्णवस्त्यजेत्॥
दिवा निद्रा परान्नञ्च पुनर्भोजनमैथुनम्।
क्षौद्रं शाकामिषन्तैलं द्वादश्यामष्ट वर्ज्जयेत्॥

ब्राह्मे—पुनर्भोजनमध्यायो भाव आयासमैथुनम्।
उपवासफलं हन्युर्दिवा निद्रा च पञ्चमी॥
अञ्जनं रोचनञ्चैब गन्धान् सुमनसस्तथा।
ब्रते चैवोपवासे च नियमेन विवर्ज्जयेत्॥

देबीपुराणे--ब्रते तीर्थेऽध्ययने च श्राद्धेऽपि च बिशेषतः।
परान्नभोजनाद्देवि यस्यान्नन्तस्य तत्फलम्॥

मनुः - उदिते यत्र मार्त्तण्डश्चाखण्डादति वर्त्तते।
अखण्डा सा तिथिर्ज्ञेया सङ्ग्राह्या तत्र कर्मणि॥

सत्यव्रतः - उदयस्था तिथिर्या हि न भवेद्दिनमध्यभाक्।
सखण्डा न व्रतानां स्यादारम्भे च समापने॥

## ३२-अथ पारणम्

गौड़ीये विष्णुधर्मोत्तरे--

द्वादश्याः प्रथमः पादो हरिवासरसंज्ञकः।
तमतिक्रम्य कुर्वीत पारणं विष्णुतत्परैः॥

कात्यायनः - सन्ध्यादिकम्भवेन्नित्यं पारणन्तु निमित्ततः ।
अद्भिस्तु पारणङ्कृत्वा नित्यकान्ते भुजिक्रिया ॥
कलार्द्धन्द्वादशीन्दृष्ट्वा निशीथादूर्ध्वमेव हि ।
आसन्नाद्य क्रियाः सर्वाः कर्त्तव्याः शम्भुशासनात् ॥
एकादश्यामुपोष्यैव द्वादश्यां पारणं स्मृतम् ।
त्रयोदश्यान्न तत्कुर्याद् दमीशद्वादशी क्षयात् ॥
महाहानिकरी ह्येषा द्वादशी लङ्घिता नृणाम् ॥

मार्क्कण्डेये - एकभुक्तेन नक्तेन तथैवायाचितेन च ।
उपवासेन दानेन नैवाद्वादशिको भवेत् ॥
चतुर्थे प्रहरे प्राप्ते मन्दीभूते दिवाकरे ।
तावन्नक्तं बिजानीयान्न नक्तं निशिभोजनम् ॥

लक्षयोगव्रते तु निर्णयसिन्धौ--

आभाकासितपक्षे तु मैत्रश्रवणरेवती ।
सङ्गमे नहि भोक्तव्यं द्वादश द्वादशीं हरेत् ॥

गौड़ीये - तिथिनक्षत्रयोगे तु ह्युपवासो यदा भवेत् ।
तावदेव न भोक्तव्यं यावन्नैकस्य संक्षयः ॥

विष्णुधर्मे - मैत्राद्यपादे स्वपतीह विष्णुः प्रौष्ठान्त्यपादे प्रतिबोधमेति ।
श्रुतेश्च मध्ये परिवर्त्तमेति सुप्तिप्रबोधपरिवर्त्तनमेव वर्ज्यम् ॥

स्मृत्यन्तरे--वरमेकादशीं भुक्त्वा द्वादशीं समुपोषयेत् ।
पूर्वोपवासजं पुण्यं नरः प्राप्नोत्यसंशयम् ।

नारदः - याः काश्चित्तिथयः प्रोक्ताः पुण्या नक्षत्रयोगतः ।
तास्वेव तद्व्रतङ्कुर्याच्छ्रवण-द्वादशीं विना ॥

भविष्ये - एकादशी यदा तु स्याच्छ्रवणेन समन्विता ।
विजया सा तदा प्रोक्ता भक्तानां विजयप्रदा ॥

ब्रह्मवैवर्त्ते - एकादशीमुपोष्यैव द्वादशीं समुपोषयेत् ।
न चात्र विधिलोपः स्यादुभयो र्देवता हरिः ॥

असमाप्ते व्रते पूर्णे नैव कुर्याद्व्रतान्तरम् ॥

इति एतदतिरिक्तव्रतविषयम् ।

भविष्ये - द्वादशी श्रवणोपेता सर्वपापहरा तिथिः ।
बुधवारसमायुक्ता ततः शतगुणा भवेत् ॥

## ३३-अथ चैत्रकृत्यम्

चैत्रशुक्लप्रतिपदि संवत्सरारम्भः--

ब्राह्मे - चैत्रे मासि जगद् ब्रह्मा ससर्ज प्रथमेऽहनि ।
शुक्लपक्षे समानन्तु तथा सूर्योदये तिथिः ॥
वत्सरादौ वसन्तादौ बलिराज्ये तथैव च ।
पूर्वविद्धैव कर्त्तव्या प्रतिपत्सर्वदा बुधैः ॥
वत्सरादौ वसन्तादौ बलिराज्ये तथैव च ।
तलाभ्यङ्गमकुर्वाणो नरकं प्रतिपद्यते ॥

चैत्रकृष्ण - त्रयोदशी वारुणी ।

गौड़ीये स्कान्दे च -

वारुणेन समायुक्ता मधौ कृष्णा त्रयोदशी ।
गङ्गायां यदि लभ्येत सूर्यग्रहशतैस्समा ॥
शनिवारसमायुक्ता सा महावारुणी स्मृता ।
गङ्गायां यदि लभ्येत कोटिसूर्यग्रहैस्समा ॥
शुभयोगसमायुक्ता शनौ शतभिषा यदि ।
महामहेति विख्याता त्रिकोटिकुलमुद्धरेत् ॥

चैत्रशुक्लप्रतिपदि नवरात्रारम्भः

मार्कण्डेये -शरत्काले महापूजा क्रियते या च वार्षिकी ।
तथैव चैत्रे कर्त्तव्या महापूजा फलप्रदा ॥

## अशोकाष्टमी

कृत्यरत्नावल्याम्—भवानीं यस्तु पश्येत शुक्लाष्टम्यां मधौ नरः।
न जातु शोकं लभते सदानन्दमयो भवेत्।

## मदनत्रयोदशी

अनङ्गत्रयोदशी रम्भा उपोष्या पूर्वसंयुता।

चैत्रशुक्ल चतुर्दशी दमकारोपणे रात्रिव्यापिनी। पूर्णिमा तु परैव।

## ३४-अथ वैशाखः

वैशाखशुक्लतृतीया अक्षयतृतीया उपवासादौ पूर्वा। दानादौ परा। तत्र रत्नावल्यां यमः—

वैशाखस्यासितेपक्षे तृतीयायाम्पुनर्वसौ।
निशायाम्प्रथमे यामे रामाख्यस्समये हरिः॥
रेणुकायास्तु यो गर्भादवतीर्णो भुवि स्वयम्॥

दिनद्वयप्राप्तौ परैव। तथाह—

शुक्ला तृतीया वैशाखे शुद्धोपोष्या दिनद्वये।
निशायां पूर्वयामे चेदुत्तराऽन्यत्र पूर्विका॥
तृतीयायान्तु वैशाखे रोहिण्यर्क्षे प्रपूज्य च।
उदकुम्भप्रदानेन शिवलोके महीयते॥

इयन्तु युगादिः।

वैशाखशुक्ला चतुर्द्दशी नृसिंहचतुर्द्दशी। सा प्रदोषव्यापिनी ग्राह्या।

नारसिंहे—वैशाखे शुक्लपक्षे तु चतुर्द्दश्यां निशामुखे।
मज्जन्मसम्भवं पुण्यं व्रतं पापप्रणाशनम्॥

दिनद्वये प्रदोषव्याप्त्यभावे परैव। उपवासदिने दन्तधावनञ्च पर्णतृणादिना, द्वादशगण्डूषै र्वा। वैशाखपूर्णिमा मन्वादिः। सा तूदयव्यापिनी ग्राह्या। उदयः चन्द्रोदयः। दानादौ परा।

वैशाख्यां विधिवत्स्नात्वा भोजयेद्ब्राह्मणान्दश।
कृशरं सर्वपापेभ्यो मुच्यते नात्र संशयः॥

## ३५-अथ ज्यैष्ठः

ज्यैष्ठकृष्ण चतुर्दश्यां सावित्रीव्रतम्--

दिवाभागे त्रयोदश्यां यदा चतुर्दशी भवेत्।
तत्र पूज्या महासाध्वी देवी सत्यवती सह॥
चतुर्दश्याममावास्या यदा भवति नारद।
उपोष्या पूजनीया च चतुर्दश्यां विधानतः॥

स्मृत्यन्तरे--अमावास्या न कर्त्तव्या भूतविद्धा कदाचन।
कर्त्तव्या वटसावित्री भूतविद्धैव सर्वदा॥
ज्यैष्ठशुक्ल तृतीयायां रम्भाव्रतम्। पूर्वविद्धा ग्राह्या।

स्मृत्यन्तरे - तृतीया तु न कर्त्तव्या द्वयोरपहृता क्वचित्।
रम्भाख्यां वर्ज्जयित्वान्या चतुर्थी सहिता शुभा॥

भविष्ये - भद्रे! कुरुष्व यत्नेन रम्भाख्यं व्रतमुत्तमम्।
ज्यैष्ठशुक्लतृतीयायां स्नाता नियमतत्परा॥

स्कान्दे - बृहत्तया तथा रम्भा सावित्री वटपैतृकी।
कृष्णाष्टमी च भूता च कर्त्तव्या सम्मुखी तिथिः॥

ज्यैज्ठशुक्लचतुर्दश्याङ्गौरीव्रतं ब्राह्मे--

ज्यैष्ठशुक्लचतुर्थ्यान्तु जाता पूर्वमुमा सती।
तस्मात्सा तत्र सम्पूज्या स्त्रीभिस्सौभाग्यवृद्धये॥

### ज्यैष्ठशुक्लदशमी दशहरा

ज्यैष्ठे मासि सिते पक्षे दशमी हस्तसंयुता।
हरते दश पापानि तस्माद्दशहरा स्मृता॥

इयन्तु गङ्गाजयन्ती। तत्र शङ्खः--

ज्यैष्ठे मासि क्षितिसुतदिने शुक्लपक्षे दशम्यां
हस्ते शैलान्निरगमदियं जाह्नवी मर्त्यलोकम्।
पापान्यस्यां हरति ह तिथौ सा दशेत्याहुरार्याः
पुण्यन्दद्यादपि शतगुणं वाजिमेधायुतस्य ॥

## ज्यैष्ठशुक्लैकादश्यान्निर्ज्जलाव्रतम्

स्कान्दे—ज्यैष्ठे मासि नृपश्रेष्ठ या शुक्लैकादशी शुभा।
निर्ज्जलं समुपोष्यात्र जलकुम्भान् सशर्क्करान् ॥
दापयेद्विप्रमुख्येभ्यः तापत्रयविवर्ज्जितः ।
विष्णुलोकमवाप्नोति मोदते विष्णुसन्निधौ ॥

ज्यैष्ठी पूर्णिमा मन्वादिः। अत्रैव सावित्री व्रतम्। तत्पूर्वंलिखितमेव ज्ञेयम्।

## अथ तिलदानम्

आदित्यपुराणे—ज्यैष्ठे मासि तिलान्दद्यात्पौर्णमास्यां विशेषतः।
अश्वमेधस्य यज्ञस्य पुण्यं प्राप्नोत्यसंशयम् ॥

## अथ आषाढः

आषाढशुक्लद्वितीयायां रथोत्सवः।

स्कान्दे—आषाढस्य सिते पक्षे द्वितीया हस्तसंयुता।
तस्यां रथे समारोप्य रमे मां भद्रया सह ॥

आषाढशुक्लैकादशी हरिशयनम्।

ब्राह्मे—एकादश्यान्तु शुक्लायामाषाढे भगवान् हरिः।
भुजङ्गशयने शेते क्षीरार्णवजले सदा ॥

अत्रैव चातुर्मास्य व्रतारम्भः—

आषाढस्य सिते पक्षे एकादश्यामुपोषितः ।
चातुर्मास्यव्रतङ्कुर्याद्यत्किञ्चित्प्रयतो नरः ॥

चातुर्मास्यवर्ज्यान्याह—

भविष्ये—श्रावणे वर्ज्जयेच्छाकन्दधि भाद्रपदे तथा ।
दुग्धमश्वयुजे मासि कार्तिके द्विदलन्त्यजेत् ॥

स्कान्दे—प्रथमे मासि कर्त्तव्यं नित्यं शाकव्रतं नरैः ।
द्वितीये मासि कर्त्तव्यन्दधिव्रतमनुत्तमम् ॥
पयोव्रतन्तृतीये तु चतुर्थेऽपि निशामय ।
द्विदलम्बहुबीजञ्च वृन्ताकञ्चैव वर्ज्जयेत् ॥

तथा—जम्बीरं राजमाषांश्च मूलकं रक्तमूलकम् ।
कूष्माण्डञ्चेक्षुदण्डञ्च चातुर्मास्ये त्यजेद्बुधः ॥

आषाढपूर्णिमायां व्यासपूजोक्ता, सा मध्याह्नव्यापिनी ग्राह्या, दिनद्वयप्राप्तौ परैव । इयन्तु मन्वादिः ।

## ३७-अथ श्रावणः

श्रावणकृष्णतृतीयायां विष्णुपूजोक्ता हेमाद्रौ—

तृतीया श्रावणे कृष्णा या स्याच्छ्रवणसंयुता ।
तस्यां सम्पूज्य गोविन्दं तुष्टिमग्र्यामवाप्नुयात् ॥

श्रावणशुक्लतृतीया मधुश्रावणी । सा गुर्ज्जरे, मैथिले च प्रसिद्धा परयुतैव ग्राह्या । श्रावणशुक्लपञ्चमी नागपञ्चमी । साऽपि परयुता ग्राह्या ।

भविष्ये - श्रावणे पञ्चमी शुक्ला प्रोक्ता सा नागपञ्चमी ।
ताःपरित्यज्य पञ्चम्यः चतुर्थीसहिता हिताः ॥

तेन परैवेति -

श्रावणे मासि पञ्चम्यां शुक्लपक्षे नराधिप ।
द्वारस्योपरि लेख्याःस्युः गोमयेन विषोल्वणाः ॥

पूजयेद्विधिवद् द्वारि दधिदूर्वाङ्कुरैः कुशैः ।
ये तस्यां पूजयन्तीह नागान् भक्तिपुरस्सरान् ॥
न तेषां सर्पतो वीर भयम्भवति कुत्रचित् ।
नर्मदोत्तरभागे तु कर्त्तव्यं सिंहयुतके ॥
कर्क्कटे संस्थिते भानावुपकुर्यात्तु दक्षिणे ॥

उपाकर्मव्यतिरिक्ते यज्ञोपवीतोत्तारणे दोषमाह स्मृतिसारे--

मलापकर्षके स्नाने गात्राभ्यङ्गे तथैव च ।
ब्रह्मसूत्रं पृथक्कुर्यादन्यत्र पतितो भवेत् ॥
कायस्थमेव तच्छोध्यं नोत्तार्यञ्च कदाचन ।
सकृदुत्तारणादेव प्रायश्चित्ती भवेन्नरः ॥

गौड़ीये - अभ्यङ्गे क्षालेन चैव दैवे पैत्र्ये च कर्मणि ।
ब्रह्मसूत्रं पृथक्कुर्यादन्यत्र पतितो भवेत् ॥

यमः - श्रावणी दौर्गनवमी दूर्वा चैव हुताशनी ।
पूर्वविद्धैव कर्त्तव्या शिवरात्रिर्बलेर्दिनम्
भाद्रायां द्वे न कर्त्तव्ये श्रावणी फाल्गुनी तथा ॥
श्रावणी नृपतिं हन्ति ग्रामन्दहति फाल्गुनी ।

## ३८-अथ भाद्रः

भाद्रकृष्णचतुर्थ्यां बहुलापूजा । सा सन्ध्याव्यापिनी ग्राह्या। तत्र स्मृत्यन्तरे--

बहुलाया गणेशस्य गौर्याश्चैव चतुर्थिका ।
कृष्णाः पूर्वयुता ग्राह्या अपराः पञ्चमी युताः ॥

अत्र स्त्रीभिर्गोपूजा कर्त्तव्या ।

स्मृत्यन्तरे—मासि भाद्रपदे षष्ठी हलषष्ठीति सा मता ।
पूर्वविद्धा तु सा ग्राह्या सप्तमी शीतलाव्रते ॥

## अथ जन्माष्टमी निर्णयः

**कृत्यरत्नावल्याम्**—कृष्णाष्टमी अर्द्धरात्रव्यापिनी ग्राह्या । अर्द्धरात्रे तु योगोऽयं रात्रावत्त्युदयेतिथिः । दिनद्वये रोहिणीयुक्तार्द्धरात्रे परैव । रोहिणीयोगाभावे अर्द्धरात्रव्यापिनी ग्राह्या । अर्द्धरात्रस्य कर्मकालत्वात् ।

**वसिष्ठः**—अष्टमी रोहिणी युक्ता निश्यर्धे दृश्यते यदि ।
मुख्यः कालस्स विज्ञेयस्तत्र जातो हरिः स्वयम् ॥
उपोषितव्यन्नक्षत्रं येनान्तं याति भास्करः ।
यत्र वा युज्यते राम निशीथे शशिना सह ॥
वासरे वा निशायां वा यदा युक्ता तु रोहिणी ।
सैवोपोष्या विशेषेण नभोमासि सदातिथिः ॥

**कृत्यरत्नावल्याम्**--दिवा वा यदि वा रात्रौ नास्ति चेद्रोहिणीकला ।
रात्रियुक्तां प्रकुर्वीत विशेषेणेन्दुसँयुता ॥

## अथ जयन्तीव्रतम्

दिनद्वये रोहिणीलाभे परैव, पारम्पर्यात् एकादशीवत् । विना ऋक्षन्नकर्त्तव्या नवमी संयुताष्टमीति ।

**ब्राह्मे** कलाकाष्ठा-मुहूर्त्तादि यदा कृष्णाष्टमी तिथिः ।
नवम्यां सैव ग्राह्या स्यात्सप्तम्या सहिता न हि ॥
उदये चाष्टमी किञ्चिन्नवमी सकला यदि ।
भवेत्तु बुधसयुक्ता प्राजापत्यर्क्षसंयुता ॥
अपि वर्षशतेनापि लभते वा न वा विभो ॥

**विष्णुधर्मोत्तरे**—अष्टमी बुधवारेण रोहिणी सहिता यदि ।
भवेत्तु मुनिशार्दूल किं व्रतैश्शतकोटिभिः ॥
याः काश्चित्तिथयः पुण्यास्तिथिवारादियोगतः ।
तास्वेव तद्व्रतङ्कुर्याद्ध्रासवृद्धी न कारयेत् ॥

## अथ पारणानिर्णयः

कृत्यरत्नावल्याम् न रात्रौ पारणङ् कुर्याद् दृश्यते त्वष्टमी व्रतात् ।
तत्र निश्यपि तत्कुर्याद्वर्ज्जयित्वा महानिशाम् ॥

गौडीये -- तिथिरष्टगुणं हन्ति नक्षत्रञ्च चतुर्गुणम् ।
तस्मात्प्रयत्नतः कुर्यात्तिथिभान्ते च पारणम् ॥
तिथिनक्षत्रयोगात्तु ह्युपवासो यदा भवेत् ।
तावदेव न भोक्तव्यं यावन्नैकस्य सङ्क्षयः ॥
सांयोगिके व्रते प्राप्ते यद्येकोऽपि वियुज्यते ।
तत्रैव पारणङ्कुर्यादेव वेदविदो विदुः ॥
जयन्त्याम्पूर्वविद्धायामुपवासं समाचरेत् ।
तिथ्यन्ते चोत्सवान्ते च व्रती कुर्वीत पारणम् ॥

यदा महानिशायामुभयस्थितिस्तदा तयोररियोगेऽपि प्रातरुत्सवान्ते च पारणम् ।

मासे नभस्यमावास्या तस्यान्दर्भोच्चयो मतः ।
अजातयामास्ते दर्भा विनियोज्याः पुनः पुनः ॥

भाद्रशुक्लतृतीयायां हरितालिकाव्रतम् । सा उदयव्यापिनी ग्राह्या, एकादशीवत् ।

स्कान्दे —कला काष्ठाऽपि याचेरन् द्वितीया सम्प्रदृश्यते ।
सा तृतीया न कर्त्तव्या कर्त्तव्या गणसंयुता ॥

भाद्रशुक्लचतुर्थी गणेशचतुर्थी । सा मध्याह्नव्यापिनी ग्राह्या । तदुक्तं हेमाद्रौ--

चतुर्थी गणनाथस्य मातृविद्धा प्रशस्यते ।
मध्याह्नव्यापिनी चेत्स्यात्परतश्च परेऽहनि ॥

भाद्रशुक्लपञ्चमी ऋषिपञ्चमी । सा मध्याह्नव्यापिनी ग्राह्या । मनुष्यदैवत्वेन मध्याह्नकालत्वात् ।

चमत्कार चिन्तामणौ -मासि भाद्रपदे प्रोक्तं व्रतं विष्णोः प्रशस्यते ।
चतुर्दश्यां प्रकुर्वीत शुक्लपक्षस्य वै तिथौ ॥

मुहूर्त्तमपि लभ्येत पूर्णिमायाञ्चतुर्द्दशी ।
सम्पूर्णान्तां विदुः प्राज्ञाः पूजयेद्विष्णुमव्ययम् ।।
भूतायां शुक्लपक्षे तु अनन्तं पूजयेद्धरिम् ।
पौर्णमासीयुता कार्या नानङ्गेन च संयुता ।।
मुहूर्त्तमपि या भूता तस्यां सम्पूजयेद्धरिम् ।
अनन्तः पूर्णिमायुक्तः कर्त्तव्यः फलकाङ्क्षिभिः ।।
जयायोगेन यः कुर्याद्रिक्तायां पूजनं हरेः ।
सर्वं पूजाफलन्तस्य वाष्कलेयाय गच्छति ।।
अतस्तु पूर्णिमायुक्ता कर्त्तव्या फलकाङ्क्षिभिः ।।

भाद्रशुक्लषष्ठी सूर्यषष्ठी । सा परविद्धा ग्राह्या । भाद्रशुक्लसप्तम्यां मुक्ताभरणव्रतम् । सा पूर्वविद्धा ग्राह्या । भाद्रशुक्लाष्टमी दूर्वाष्टमी । सा पूर्वविद्धा ग्राह्या ।

तदुक्तं पुराणसमुच्चये--शुक्लाष्टमी तिथिर्या तु मासि भाद्रपदे भवेत् ।
दूर्वाष्टमी तु सा ज्ञेया नोतरा सा विधीयते ।।
शुक्लाभाद्रपदे मासि दूर्वा संज्ञा तु याऽष्टमी ।
सिंहके एव कुर्वीत न कन्यार्के कदाचन ।।

भाद्रशुक्लद्वादश्यां वामनव्रतम् । भाद्रशुक्लचतुर्दश्यामनन्तव्रतम् । तन्निर्णयश्लोकाः षष्ठीव्रतात्पूर्वं वेष्टिता ज्ञेयाः ।

शुक्लपक्षोऽष्टमी चैव शुक्लपक्षे चतुर्दशी ।
पूर्वविद्धा न कर्त्तव्या कर्त्तव्या परसंयुता ।।

## ३९--अथाश्विनः

आश्विनकृष्णाष्टम्यां महालक्ष्मीव्रतम् । सा पूर्वविद्धा ग्राह्या । ततुक्तं कृत्यरत्नावल्याम्—

कृष्णपक्षेऽष्टमी चैव कृष्णपक्षे चतुर्दशी ।
पूर्वविद्धैव कर्त्तव्या परविद्धा न कुत्रचित् ।।

चन्द्रोदयव्यापित्वे दिनद्वये पूर्वैव, इति दाक्षिणात्यमतम् । मध्यदेशिकमते सायङ्कालव्यापिन्येव । तदुक्तं -

**भविष्ये**—अथ कृष्णाष्टमीम्प्राप्य नक्तकाले जितेन्द्रियः ।
स्नातः शुक्लाम्बरधरो व्रती पूजागृहं विशेत् ।।

**पाद्मे**—प्रदोषसमये लक्ष्मीम्पूजयित्वा यथाविधि ।
ब्राह्मणान्भोजयेदादौ विभवे तु बुभुक्षितान् ।।

देशाचारानुसारिणी व्यवस्था—

**नारदीये**—देशाचाराः परिग्राह्यास्तत्तद्देशीयजैर्नरैः ।
अन्यथा पतितो ज्ञेयस्सर्वधर्मबहिष्कृतः ।।

## कलशस्थापनम्

**देवीपुराणे**—श्रृणु राजन् प्रवक्ष्यामि चण्डिकापूजनक्रमम् ।
आश्विनस्य सितेपक्षे प्रतिपत्सु शुभे दिने ।।
शुद्धे तिथौ प्रकर्त्तव्यं प्रतिपच्चोर्द्ध्वगामिनी ।
आद्यास्तु नाडिकास्त्यक्त्वा षोडश द्वादशापि वा ।।
अपराह्णे प्रकर्त्तव्यं शुद्धसन्ततिकाङ्क्षिभिः ।।

**देवीपुराणे देवीवाक्यम्**—अमायुक्ता न कर्त्तव्या प्रतिपत्पूजने मम ।
मुहूर्त्तमात्रा कर्त्तव्या द्वितीया द्विगुणान्विते ।।
आद्याः षोडशनाडीस्तु लब्ध्वा यः कुरुते नरः ।
कलशस्थापनन्तत्र ह्यरिष्टं जायते ध्रुवम् ।।
पूर्वविद्धा तु या शुक्ला भवेत्प्रतिपदाश्विनी ।
नवरात्रव्रतं तस्यां न कार्यं शुभमिच्छता ।।

**कृत्यरत्नावल्याम्**—देशभङ्गम्भवेत्तत्र दुर्भिक्षञ्चोपजायते ।
नन्दायान्दर्शयुक्तायां यत्र स्यान्मम पूजनम् ।।

**देवीपुराणे**—वर्ज्जनीया प्रयत्नेन अमायुक्ता तु पार्थिव ।
द्वितीयादि गुणैर्युक्ता प्रतिपत्सर्वकामदा ।।

**देवलः** --व्रतोपवासनियमे घटिकैका यदा भवेत् ।
सा तिथिस्तद्दिने पूज्या विपरीता तु पैतृकी ॥

यदा पूर्वदिने सम्पूर्णा शुद्धा च भूत्वा परदिने वर्द्धते तदा अमाभावायोगाच्च पूर्वव । एवं परदिने प्रतिपदोत्यन्तासत्त्वे दर्शयुताऽपि कार्या । तदाह--

**नन्दः** --तिथिः शरीरं तिथिरेव कारणं तिथिप्रमाणं तिथिरेव साधनमिति ।

भार्गवार्च्चनदीपिकायां **देवीपुराणे**--

त्वष्टा वैधृतियुक्ता चेत्प्रतिपच्चण्डिकार्च्चने ।
तयोरन्ते विधातव्यङ्कलशारोपणङ्गृहे ॥

**कात्यायनः**--प्रतिपद्याश्विने मासि भवेद्वैधृतिचित्रयोः ।
आद्यपादं परित्यज्य प्रारम्भे नवरात्रकम् ॥

**भविष्ये** - चित्रा वैधृति सम्पूर्णा प्रतिपच्चेद्भवेन्नृप ।
त्याज्याद्यंशास्त्रयस्त्वाद्यास्तुरीयायां च पूजनम् ॥

**रुद्रयामले** - वैधृतौ पुत्रनाशःस्याच्चित्रायां धननाशनम् ।
तस्मान्न स्थापयेत्कुम्भञ्चित्रायां वैधृतौ तथा ॥
सम्पूर्णा प्रतिपच्चैव चित्रायुक्ता यदा भवेत् ।
वैधृत्या वाऽपि युक्तास्यात्तदा मध्ये दिने रवौ ॥
अभिजित्तु मुहूर्त्तं यत्तत्र स्थापनमिष्यते ॥

**मात्स्ये** -- न रात्रौ स्थापनङ्कार्यं न च कुम्भाऽभिषेचनम् ।
भास्करोदयमारभ्य यावत्तु दशनाडिकाः ॥
प्रातःकाल इति प्रोक्तः स्थापनारोपणादिषु ॥

**व्यासः** - पुष्पालङ्कारवस्त्राणि गन्धधूपानुलेपनम् ॥
उपवासे न दुष्यन्ति दन्तधावनमञ्जनम् ॥

इदन्तु केवलं नवरात्रव्रते सधवोपवासविषयम् ।

तथा - अञ्जनञ्च सताम्बूलं कुङ्कुमं रक्तवाससी।
धारयेत्सोपवासेऽपि न वैधव्यकरं यत: ॥

अथाश्विनशुक्लसप्तम्यां मूलनक्षत्रे सरस्वतीस्थापनम्।

तदुक्तं निर्णयामृते देवीपुराणे –

मूलेषु स्थापनं देव्या: पूर्वाषाढासु पूजनम्।
उत्तरासु बलिन्दद्याच्छ्रवणेन विसर्ज्जयेत् ॥
नाध्यापयेन्न लिखेन्नाधीयीत कदाचन ।
पुस्तकेस्थापिते देव विद्याकामो द्विजोत्तम: ॥

ब्रह्माण्डे--आदिभागो निशायान्तु श्रवणस्य यदा भवेत्।
सम्प्रेषणन्तदा देव्या दशम्याञ्च महोत्सव: ॥

अथ महाष्टमी। सा परयुता ग्राह्या।

तदुक्तं ब्रह्मवैवर्त्ते—

शुक्लपक्षेऽष्टमीचैव शुक्लपक्षे चतुर्दशी।
पूर्वविद्धा न कर्त्तव्या कर्त्तव्या परसंयुता ॥
जम्भेन सप्तमीयुक्ता पूजिता तु महाष्टमी।
इन्द्रेण निहतो जम्भस्तस्माद्दानवपुङ्गव: ॥
पुत्रान् हन्ति पशून् हन्ति हन्ति राष्ट्रं सराजकम।
हन्ति जातानुजातांश्च सप्तमी सहिताष्टमी ॥

दुर्गाभक्तितरङ्गिण्याम्---

न दिवा न निशा न रवि हि हता न च सप्तमि शल्यसमोपहता।
यदि चाष्टमि शेषहता नवमी अमरैपि पूज्यतमा कथिता।

तस्मात्सर्वप्रयत्नेन सप्तमी सहिताष्टमी ।
वर्ज्जनीया प्रयत्नेन मनुजै: शुभकाङ्क्षिभि: ॥

पाद्मे - अष्टमी नवमी युक्ता नवमी चाष्टमीयुता ।

इयमेव मूलयुता महानवमी-

**निर्णयसिन्धौ**-अश्वयुक् शुक्लपक्षे चाऽष्टमी मूलसंयुता ।
सा महानवमी प्रोक्ता त्रैलोक्येऽपि सुदुर्लभा ॥

अत्यन्तासत्त्वे सप्तमीयुताऽपि कार्या ।

**स्मृतिसारे**— सप्तम्यामुदिते सूर्ये परतो चाष्टमी भवेत् ।
तत्र दुर्गोत्सवङ्कुर्यान्न कुर्यादपरेऽहनि ॥

निर्णयसिन्धौ मदनरत्नेच—

महाष्टम्याश्विने मासि शुक्ला कल्याण कारिणी ।
सप्तम्याऽपि युता कार्या मूलेन तु विशेषतः ॥

तथा च कृत्यरत्नावल्यां स्मृतिसङ्ग्रहे च—

यदा सूर्योदये न स्यान्नवमी चापरेऽहनि ।
तदाऽष्टमी प्रकुर्वीत सप्तम्या सहिता नृप ॥

अहं भद्रा च भद्रा त्वं नावयोरन्तरङ्क्वचित् ।
तस्माद्वै सप्तमीविद्धा कार्या दुर्गाष्टमी तिथिः ॥

इति परदिनेऽष्टम्यभावविषयिणीति । केवलाष्टम्योपवासः पुत्रवतो निषिद्धः ।

**कालिकापुराणे** - उपवासं महाष्टम्यां पुत्रवान्न समाचरेत् ।
यथा तथा वा पूतात्मा व्रती देवीम्प्रपूजयेत् ॥

**मदनरत्ने** - अष्टम्यामुदिते सूर्ये दिनान्ते नवमी भवेत् ।
कुजवारो भवेत्तत्र पूजनीया प्रयत्नतः ॥

अथ पारणम् ।

**निर्णयसिन्धौ**—आश्विने शुक्लपक्षे तु नवरात्रमुपोषितः ।
नवम्यां पारणङ्कुर्याद्दशमीमिश्रिता न चेत् ॥
नवम्यां पारिता देवी कुलवृद्धिम्प्रयच्छति ।
दशम्यां पारिता देवी कुलनाशङ्करोति वै ॥

तस्मात्तु पारणङ्कुर्यान्नवम्यां विबुधाधिप ॥

## अथ महानवनी

**सौरपुराणे** - अश्वयुक् शुक्लनवमी मुहूर्त्तं वा कला यदि ।
सा तिथिः सकला ज्ञेया लक्ष्मीविद्याजयार्थिभि: ॥

**देवीपुराणे**—सूर्योदये परं रिक्ता पूर्णास्यादपरा यदि ।
बलिदानं प्रकर्त्तव्यन्तत्र देशे शुभावहम् ॥
बलिदाने कृतेऽष्टम्यां पुत्रभङ्गो भवेन्नृप ॥
बलिदानं नवम्यामेव कर्त्तव्यम् ।

## अथ विजयादशमी ।

सा दिनद्वये श्रवणयोगाभावे परैव ।
परदिने श्रवणरहिते श्रवणा युता ग्राह्या ।
तदुक्तं हेमाद्रौ निर्णयसिन्द्धौ च--

दशम्यान्तु नरै: सम्यक् पूजनीयाऽपराजिता ।
ऐशानीन्दिशिमाश्रित्य अपराह्ले प्रयत्नत: ।।
श्रवणर्क्षे तु पूर्णायाङ्काकुत्स्थः प्रस्थितो यतः ।
उल्लङ्घयेयु: सीमानन्तद्दिनर्क्षे ततो नरा: ॥

**नारद:**—इषस्य दशमीं शुक्लां पूर्वविद्धान्न कारयेत् ।
श्रवणेनापि संयुक्तां राज्ञां पदाभिषेचनम् ॥

दिनद्वये प्राप्ते परैव ग्राह्या ।

सूर्योदये यदा राजन् दृश्यते दशमी तिथि: ।
आश्विने मासि शुक्ले तु विजयां तां विदुर्बुधा: ॥

## ४०--अथ कार्त्तिक:

कार्त्तिकामावास्यायां सुखरात्रि: । सा प्रदोषव्यापिनी ग्राह्या । तुदुक्तं

गौडीये—दण्डैकं रजनीयोगे दर्शःस्यादपरेऽहनि ।
तदा विहाय पूर्वेद्युः पराह्णे सुखरात्रिका ॥

अस्यां लक्ष्मीपूजनमुक्तम् —

प्रदोषसमयेलक्ष्मीम्पूजयित्वा यथाविधि ।
ब्राह्मणान्भोजयेदादौ विभवे तु बुभुक्षितान् ॥

अस्यामेव दीपदानं कर्त्तव्यम् ।

गृहे गृहाङ्गणे देया दीपाश्चत्वरि भूमिषु ॥

कार्तिकशुक्लनवमी युगादिः । पूर्णिमा मन्वादिः । अस्यामेव मत्स्यो जातः ।

## ४१--अथाग्रहणः

मार्ग कृष्णाष्टमी कालाष्टमी । सा रात्रिव्यापिनी ग्राह्या ।

मार्गशीर्षासिताष्टम्यां कालभैरवसन्निधौ ।
उपोष्य जागरणङ्कुर्यात्सर्वपापैः प्रमुच्यते ॥

मार्गशुक्लषष्ठी चम्पाषष्ठी । सा सप्तमीयुता ग्राह्या । इयमेव स्कन्दषष्ठी पूर्वविद्धा ग्राह्या ।

कृष्णाष्टमी स्कदषष्ठी शिवरात्रिचतुर्दशी ।
एताः पूर्वयुताः कार्याः तिथ्यन्ते पारणं भवेत् ॥

## ४२--पौषशुक्लैकादशी मन्वादिः

## ४३--अथ माघः

माघशुक्लपञ्चमी श्रीपञ्चमी । सा परयुक्ता ग्राह्या । माघशुक्लषष्ठी कपिलषष्ठी तथैव । माघशुक्ला सप्तमी भानुसप्तमी । सा अरुणोदयव्यापिनी ग्राह्या । तदुक्तं

**भविष्ये**—सूर्यग्रहणतुल्या हि शुक्ला माघस्य सप्तमी ।
अरुणोदयवेलायां तस्यां स्नानं महाफलम् ॥

स्नानपरिपाटीविशेषमाह **विष्णु:**—

सप्तार्क्कपत्राणि, सप्त बदरपत्राणि, शिरसि निधाय, मन्त्र:—

"ओं यद्यज्जन्मकृतं पापं मया सप्तसु जन्मसु ।
तन्मे रोगञ्च शोकञ्च माकरी हन्तु सप्तमी ॥
अर्क्कपत्रैस्सबदरैः दूर्वाक्षत - सचन्दनैः ।
अष्टाङ्गविधिना सर्वन्दद्यादादित्यतुष्टये ॥
जननी सर्वभूतानां सप्तमी सप्तसप्तिके ।
सप्तव्याहृतिके देवि नमस्ते रविमण्डले ॥
सप्त सप्तरहप्रीति सप्तलोकप्रदीपने ।
सप्तम्यान्तु नमस्तुभ्यं नमोऽनन्तायत वेधसे ॥"

माघशुक्लाष्टमी भीष्माष्टमी । सा परयुता ग्राह्या । अस्यां भीष्मतर्पणमुक्तं,

**भविष्ये**—शुक्लाष्टम्यान्तु माघस्य दद्याद्भीष्माय यो जलम् ।
संवत्सरकृतम्पापन्तत्क्षणादेव नश्यति ॥

तर्पणरहिते दोषमाह—

**स्मृत्यन्तरे**—ब्राह्मणाद्यास्तु ये वर्णा दद्युर्भीष्माय नो जलम् ।
संवत्सरकृतम्पुण्यं सर्वं नश्यति तत्क्षणात् ॥
ब्राह्मणस्तुल्यवर्णानां यः करोत्यौर्द्ध्वदेहिकम् ।
तद्वर्णत्वमसौ याति इह लोके परत्र च ॥

इति मरीचिवचनं भीष्मकृतेतरपरम् ।

तदाह **गौडीये**- अष्टम्यान्तु सितेपक्षे भीष्माय सतिलोदकम् ।
अन्नञ्च विधिवद्दद्युः सर्ववर्णा द्विजातयः ॥

**तर्पणमन्त्र:**—वैयाघ्रपादगोत्राय सकृत्यप्रवराय च ।
अपुत्राय ददाम्येतदमृतं भीष्मवर्मणे ॥"

भीष्म. शान्तनवोवीरः सत्यवादी जितेन्द्रियः ।
आभिरद्भिरवाप्नोतु पुत्रपौत्रोचितां क्रियाम् ।।

पितृतर्पणानन्तरन्तर्पयेदिति । भीष्म-यम-तर्पणञ्जीवत्पितृकोऽपि कुर्यात् ।

तथा च स्मृत्यन्तरे-

पितृजीव्यपि कुर्वीत तर्पणं यम-भीष्मयोः ।।

माघशुक्ला नवमी द्रोणनवमी । माघीपूर्णिमा युगादिः ।

## ४४- अथ फाल्गुनः

फाल्गुनकृष्णा चतुर्दशी शिवरात्रिः। सा पूर्वविद्धार्द्धरात्रव्यापिनी ग्राह्या । ततुक्तं मार्कण्डेये--

माघफाल्गुनयोर्मध्ये कृष्णपक्षे चतुर्दशी ।
शिवरात्रिस्तु विज्ञेया सर्वक्रतुफलप्रदा ।।

तथा च शिवधर्मोत्तारे—

त्रयोदशी च सम्पूर्णा निशायाञ्च चतुर्दशी ।
उपोष्या सा विशेषेण हीत्येवं शम्भुरब्रवीत् ।।
कामविद्धो हरः पूज्यः कृष्णपक्षे विशेषतः ।
शुक्लपक्षे महीपाल पूर्वविद्धान्न कारयेत् ।।

**गौडीये**—माघमासस्य शेषे वा प्रथमः फाल्गुनस्य च ।
कृष्णा चतुर्दशी सा तु शिवरात्रिः प्रकीर्तिता ।।
शैवो वा वैष्णवो वाऽपि यो वा स्यादन्यपूजकः ।
सर्वं पूजाफलं हन्ति शिवरात्रिबहिर्मुखः ।।

ईशान संहितायाम्--

पूर्वेद्युरपरेद्युर्वा महानिशि चतुर्दशी ।
व्याप्ता सा दृश्यते यस्यां तस्यङ्कुर्याद्व्रतन्नरः ।।

महानिशाभावे प्रदोषव्यापिनी ग्राह्या । तत्र स्मृत्यन्तरे–

प्रदोषव्यापिनी ग्राह्या शिवरात्रिचतुर्दशी ।

प्रदोषमाह वत्स:-

प्रदोषोस्तमयादूर्ध्वं घटिकाद्वयमिष्यते ॥

चेदुभयव्यापिनी तदा पूर्वा ।

त्रयोदश्यस्तगे सूर्ये चतसृष्विव नाडिषु ।
भूतविद्धा तु या तत्र शिवरात्रिव्रतञ्चरेत् ॥

इति पद्मपुराणीयात् । दिनद्वये निशीथव्यापिनी तदा परैव ।

शिवरात्रि व्रते भूतां कामविद्धां विवर्ज्जयेत् ॥

पारणन्तु चतुर्दश्यामेव । तदभावेऽमावास्यायाम् ।

तदुक्तम्-

गौडीये – ब्रह्माण्डोदरमध्ये तु यानि तीर्थानि सन्ति वै ।
पूजितानि भवन्तीह भूतायां पारणे कृते ॥

पाद्मे—शिवा घोरा तथा प्रेता सावित्री च चतुर्दशी ।
कुहूयुक्तैव कर्त्तव्या कुह्वामेव हि पारणम् ॥

स्कान्दे – उपोषणञ्चतुर्दश्याञ्चतुर्दश्यान्तु पारणम् ।
कृतैः सुकृतलक्षैश्च लभ्यते वाऽथ वा न वा ॥

शिवरहस्ये—त्रयोदशीसमायुक्ताङ्कृत्वा शिवचतुर्दशीम् ।
पारणन्तु चतुर्दश्याङ्कोटियज्ञफलं लभेत् ॥

ब्रह्माण्डे - उपोषणञ्चतुर्दश्याञ्चतुर्दश्यान्तु पारणम् ।
सिक्थे सिक्थे फलन्तस्य न जानेऽहं वरानने ॥
तावद्गर्ज्जन्ति तीर्थानि व्रतानि विविधानि च ।
यावन्न दृश्यते भूतां पारणं सुरसुन्दरि ॥

इदं व्रतमावश्यकम् । तथा च--

वर्षे वर्षे महादेवि नरो नारी पतिव्रता ।
शिवरात्रौ महादेवं नित्यं भक्त्या प्रपूजयेत् ॥
अर्णवो यदि वा शुष्येत्क्षीयते हिमवानपि ।
कम्पन्ते ते कदाचिद्वै निश्चलं हि शिवव्रतम् ।

फाल्गुनी पूर्णिमायां मन्वादिः । होलिकादाहः कृत्यरत्नावल्याम् -

भद्रायां द्वे न कर्त्तव्ये श्रावणी फाल्गुनी तथा ।
श्रावणी नृपतिं हन्ति ग्रामन्दहति फाल्गुनी ॥
**स्मृतिसारे** - पूर्णा पूर्णदलं यावत्तावत्तिष्ठति वत्सरः ।
अत ऊर्ध्वङ्गते प्राणे निशि दाहं समाचरेत् ॥
**नारदः** - भद्रामुखं परित्यज्य होलिकायाः प्रपूजनम् ॥

## ४५-अथ सङ्कष्टचतुर्थी

**स्कान्दे** - श्रावणे बहुले पक्षे चतुर्थ्यान्तु विधूदये ।
गणेशं पूजयित्वा तु चान्द्रमायुर्न हीयते ॥
इयं चन्द्रोदयव्यापिनी ग्राह्या । दिनद्वये पूर्वैव । तदुक्तं गौडीये--
चतुर्थी गणनाथस्य मातृविद्धा प्रशस्यते ॥
मातृविद्धाभावात्परैवेति माधवः । द्विमुहूर्त्तो वेधः ।
सरोजकलिकायाम्--
व्रतम्प्राथमिकं स्नानं देवतानाञ्च दर्शनम् ।
शुक्रास्तादौ न कुर्वीत करणे मरणम्भवेत् ॥
गयाव्यतिरिक्तवचनमिदम् ।

**वायुपुराणे** - गयायां सर्वकालेषु पिण्डन्दद्याद्विचक्षणः ।
अधिमासे जन्मदिने अस्ते च गुरु शुक्रयोः ।
न त्यक्तव्यङ्गयाश्राद्धं सिंहस्थञ्च बृहस्पतौ ॥

## ४६-अथ युगाद्याः

ब्रह्माण्डे - वैशाखमासस्य च या तृतीया नवम्यसौ कार्तिक शुक्लपक्षे ।
नभस्यमासस्य तमिस्रपक्षे त्रयोदशी पञ्चदशी च माघे ॥
युगारम्भास्तु तिथयो युगाद्याः परिकीर्तिताः ।
वैशाखशुक्लपक्षे तु तृतीयायाङ् कृत युगम् ॥
कार्तिके शुक्लपक्षे तु त्रेता च नवमेऽहनि ।
अथ भाद्रपदे मासि त्रयोदश्यान्तु द्वापरम् ॥
माघस्य पौर्णमास्यान्तु घोरङ्कलियुगं स्मृतम् ॥

## ४७-अथ मन्वादिः

स्मृतिसमुच्चये – अश्वयुक्शुक्लनवमी द्वादशी कार्त्तिकी तथा ।
तृतीया चैत्रमासस्य तथा भाद्रपदस्य च ॥
फाल्गुनस्याप्यमवास्या पौषस्यैकादशी तथा ।
आषाढस्यापि दशमी तथा माघस्य सप्तमी ॥
श्रावणस्याष्टमी कृष्णा तथाऽऽषाढस्य पूर्णिमा ।
आषाढी कार्तिकी चैत्री ज्यैष्ठी पञ्चदशी सिता ॥
मन्वन्तरादयस्त्वेता दत्तस्याक्षयकारकाः ।
अमावास्याष्टमीव्यतिरिक्ताः सर्वा एव शुक्लाः ॥

## ४८-अथ सङ्क्रान्ति पुण्यकालाः

स्मृतिसमुच्चये गार्ग्यः–

कर्कटे विंशतिः पूर्वा मकरे विंशतिः परा ।
वर्त्तमाने तुलामेषे नाड्यस्तूभयतो दश ॥
विंशत्कर्कटके नाड्यः मकरे तु दशाधिकाः ॥
इति ब्रह्मवैवर्त्तात् ।

गार्ग्यः – यद्यस्तमयवेलायां मकरं याति भास्करः ।
प्रदोषे चार्द्धरात्रे वा स्नानं दानं परेऽहनि ॥

कार्मुकन्तु परित्यज्य सन्ध्यं याति दिवाकरः ।
प्रदोषे चार्द्धरात्रे वा स्नानं दानं परेऽहनि ॥

बौधायनेन दिनद्वयमुक्तम्—

अस्तङ्गते यदा सूर्ये सन्ध्यं याति दिवाकरः ।
प्रदोषे चार्द्धरात्रे वा तदा पुण्यं दिनद्वयम् ॥

स्मृत्यन्तरे - या या सन्निहिता नाड्यस्तास्ताः पुण्यतमाःस्मृताः ।
धनुर्मीनावतिक्रम्य कन्या च मिथुनन्तथा ॥
पूर्वापरविभागे च रात्रौ सङ्क्रमणं यदा ।
दिनान्ते पञ्चनाड्यस्तु तदा पुण्यतमाः स्मृताः ॥
उदयेऽपि तथा पञ्च देवे पित्र्ये च कर्मणि ।
पूर्णे चेदर्द्धरात्रे तु यदा सङ्क्रमते रविः ॥
प्राहुर्द्दिनद्वयं पुण्यं त्यक्त्वा मकरकर्क्कटौ ।

ज्यौतिषे-

पूर्वतोऽपि परतोऽपि सङ्क्रमात्पुण्यकालघटिकास्तु षोडश । कुम्भसङ्क्रान्तेः पूर्वाः षोडशघटिकाः पुण्याः । मीनसङ्क्रान्तेः पराः षोडश घटिकाः पुण्य । मेषसङ्क्रान्तेः प्राक् अपरा दशघटिकाः पुण्याः । वृषसङ्क्रान्तेः पुण्य षोडश घटिकाः पुण्याः । मिथुनसङ्क्रान्तेः पराः षोडश घटिकाः पुण्याः । कर्क्कसङ्क्रान्तेः पूर्वाः त्रिंशद् घटिकाः पुण्याः । तथा--

मिथुनात्कर्क्कसङ्क्रान्तौ यदि स्यादंशुमालिनः ।
प्रभाते वा निशीथे वा तदा पुण्यन्तु पूर्वतः ॥

पूर्वदिन एव पुण्यम् । सिंहसङ्क्रान्तेः पराः षोडश । कन्यासङ्क्रान्तेः पराः षोडश । तुलासङ्क्रान्तेः प्रागपरादश । वृश्चिकसङ्क्रान्तेः पूर्वाः षोडश । धनुसङ्क्रान्तेः पराः षोडश । मकरसङ्क्रान्तेः पराश्चत्वारिंशत् त्रिंशद्वा ।

देवीपुराणे--मानार्द्धम्भास्करे पुण्यमपूर्णे शर्वरीदले ।
सम्पूर्णे तूच्चयो देयमतिरेके परेऽहनि ॥

निशावर्कंचाराग्निकटं दिनार्द्धन्दिवावर्कंचाराग्निकटाष्टघट्य: ।।
रात्रिसंक्रमे चेयं व्यवस्था । दिवासङ्क्रमे पूर्वोक्तं ज्ञेयम् ।

इति सङ्क्रान्ति निर्णय:

## ४९-अथार्द्धोदययोग:

**गौडीये**--अमार्द्धपातश्रवणै युक्ताचेत्पौषमाघयो: ।
अर्द्धोदय: स विज्ञेय: कोटिसूर्यग्रहैस्समः ।।
दिवैव योगः शस्तोऽयं नच रात्रौ कदाचन ।।

**स्मृतिसमुच्चये** - मघास्विन्दुक्षये याति वारेक्र्क श्रवणं यदि ।
अर्द्धोदय: स विज्ञेय: सहस्रावर्कग्रहैस्समः ।।

## ५०-अथ प्रायश्चित्तप्रकरणम्

### अथ गर्भिणीदाहप्रायश्चित्तम्

**प्रयोगसारे**--गर्भिण्यान्तु मृतायान्तु गर्भंजीवनशङ्कया ।
विलोक्य गर्भंन्दग्धव्या ह्येवं धर्मो न हीयते ।।

**स्वर्गसोपाने**-यदा गर्भवती नारी सशल्या संस्थिता भवेत् ।
कुक्षिम्भित्वा ततः शाल्यं निर्हरेद्यदि जीवति ।।
सगर्भदहने तस्या वर्णजं बधपातकम् ।
प्रायश्चित्तञ्चरित्वा तु शुध्यन्ते पापकारिणः ।।
दग्ध्वा तु गर्भसंयुक्तां त्रिरब्दं कृच्छ्रमाचरेत् ।
प्रमीतं निःक्षिपेच्छल्यं प्रायश्चित्तन्ततः परम् ।।
ज्ञातयस्त्रिशताकृच्छ्रैः शुद्धयन्ते शल्यदोषतः ।।

### अथापमृत्युप्रायश्चित्तम् ।

**बौधायनः**– अन्तरिक्षे मृते ये च वह्नौ चाथ जलेऽपि वा ।
उदक्या सूतिका चैव चरेच्चान्द्रायणत्रयम् ।।

अपमृत्युमरणे सर्वत्रैव चान्द्रापणत्रयम् ।
चान्द्रायणेन सह कृच्छ्राति कृच्छ्रेण शुद्धोभवति ।

**आपस्तम्बः**—भुञ्जानस्य तु विप्रस्य कदाचिद् द्रवते गुदम् ।
उच्छिष्टमशुचित्वन्तु प्रायश्चित्तं कथम्भवेत् ।।
आदौ कृत्वा तु शौचं वै ततः पश्चादपः स्पृशेत् ।
अहोरात्रोषितो भूत्वा पञ्चगव्येन शुद्ध्यति ।।

**शातातपः**—निगिरन्यदि मेहेत भुक्तता मेहने कृते ।
अहोरात्रोषितो भूत्वा जुहुयात्सर्पिषाहुतिः ।।
मूत्रोच्चारसमुत्सर्गे मोहाद्भुक्तेऽथ वा पिबेत् ।
त्रिरात्रं तत्र कुर्वीत इति शातातपोऽब्रबीत् ।।

**याज्ञवल्क्यः**—अनादिष्टेषु पापेषु शुद्धिश्चान्द्रायणेन तु ।
धर्मार्थं यश्चरेदेतच्चन्द्रस्येति सलोक्यताम् ।।

**शूलपाणौ**-गुर्विणी बालवत्सा च रोगी द्रव्यपरायणः ।
एते नक्तेषु भुञ्जन्ति बाला मध्याह्न एवच ।।
व्रतस्थः प्राणरक्षार्थङ्कदाचिदुदकम्पिबेत् ।
फलमूले तथा क्षीरं यज्ञशिष्टन्तथा हविः ।।
व्रतमध्ये तु रोगार्त्ता वैद्यप्रोक्तमथौषधम् ।
करोति च गुरोर्वाक्यं व्रतस्थस्तत्क्षणादपि ।।

**बौधायनः**—अष्टौ नाऽस्य व्रतघ्नानि ह्यापो मूल फलम्पयः ।
हवि र्ब्राह्मणकाम्या च गुरोर्वचनमौषधम् ।।

**हारीतयमौ**--बलयश्चोपहारश्च हवींषि चरवस्तथा ।
निर्विशङ्केन भोक्तव्यं व्रतमस्य न लुप्यति ।।

**मनुः**— श्वशृगालखरैर्दंष्टो ग्राम्यैः क्रव्याद्भिरेव च ।
नर श्चोष्ट्रवराहैश्च प्राणायामेन शुद्ध्यति ।।

**याज्ञवल्क्यः**- पुंश्चली वानरखरैर्दष्टश्चोष्ट्रादिवायसैः ।
प्राणायाममञ्जले कृत्वा घृतं प्राश्य विशुद्धयति ॥

**मिताक्षरायाम्**-अनड्वाहं समारुह्य प्राजापत्यत्रयञ्चरेत् ।
अज्ञानात्तु तदर्द्धं स्यात्पुनः संस्कारमर्हति ॥

अथ भाद्रश्रावणमाघमासेषु गो-महिषी अश्वादि-प्रसवे प्रायश्चित्तम् ।

अद्भुतसागरे--

**नारदः**—भानौ सिंहगते चैव यस्य गौः संप्रसूयते ।
मरणन्तस्य निर्दिष्टं षड्भिर्मासैर्न्न संशयः ॥
तत्र शान्तिम्प्रवक्ष्यामि येन सम्पद्यते शुभम् ।
प्रसूतान्तत्क्षणादेव तां गां विप्राय दापयेत् ॥
ततो होमं प्रकुर्वीत घृताक्तै राजसर्षपैः ।
आहुतीनांऽयुताक्तानामयुतञ्जुयात्ततः ॥

व्याहृतिभिश्चायं होमः ।

सोपवासः प्रयत्नेन दद्याद् द्विप्राय दक्षिणाम् ।
सिंहराशौ गते सूर्ये गोः प्रसूतिर्यदा भवेत् ॥
माघे च महिषी सूते दिवैवाऽश्वतरी तथा ।
तदाऽनिष्टम्भवेत्किञ्चित्तच्छान्त्यै शान्तिमाचरेत् ॥
अस्य वामेति सूक्तेन तद्विष्णोरिति मन्त्रतः ।
जुहुयाच्च तिलाज्येन शतमष्टोत्तराधिकम् ॥
मृत्युञ्जयविधानेन जुहुयाच्च तथायुतम् ।
श्रीसूक्तेन ततः स्नायाच्छान्तिसूक्तेन वा पुनः ॥
मध्यरात्रे निशीथे वा यदा गौः क्रन्दते स्वयम् ।
ग्रामे वा स्वगृहे वाऽपि शान्तिकं पूर्ववद्दिशेत् ॥

**तदुक्तमथर्ववेदिनां गार्ग्यपरिशिष्टे**–

माघे बुधे च महिषी श्रावणे वडवा दिवा ।
सिंहे गावः प्रसूयन्ते स्वामिनो मृत्युदायिकाः ॥

कृत्यरत्नावल्याम्--

माघे च महिषी रात्रौ श्रवणे वडवा दिवा।
सिंहे गावः प्रसूयन्ते स्वमिनो बध च्छति ॥

इति प्रायश्चित्तप्रकरणम्।

## ५१-अथ व्रतानि

**मनुः**—त्र्यहं प्रातस्त्र्यहं साय त्र्यहमद्यादयाचितम्।
त्र्यहं परञ्च नाश्नीयात्प्राजापत्यविधिः स्मृतः॥
एकमुक्तेन नक्तेन तथैवायाचितेन च।
उपवासेन चैकेन कृच्छ्रपादः प्रकीर्तितः॥

**वसिष्ठः**—एकैकं वर्द्धयेत्पिण्डं शुक्लकृष्णे च ह्रासयेत्।
इन्दुक्षयेन भुञ्जीत एष चान्द्रायणो विधिः॥

**याज्ञवल्क्यः**--तिथिवृद्धया चरेत्पिण्डान् शुक्ले शिख्यण्डसस्मितान्।
एकैकं ह्रासयेत्कृष्णे पिण्डञ्चान्द्रायणञ्चरन्॥

**मनुः**---अष्टावष्टौ समश्नीयात्पिण्डान्मध्यन्दिने स्थिते।
नियतात्मा हविष्यस्य यतिचान्द्रायणञ्चरन्॥
चतुरः प्रातरश्नीयात्पिण्डान् विप्रस्समाहितः।
चतुरोऽस्तमिते सूर्ये शिशुचान्द्रायणञ्चरन्॥

**यमः**--त्रींस्त्रीन् पिण्डान् समश्नीयान्नियतात्मा दृढव्रतः।
हविष्यान्नस्य वै मासमृषिचान्द्रायणञ्चरन्॥

**मार्कण्डेयः**--गोक्षीरं सप्तरात्रन्तु पिबेत्तेन चतुष्टयात्।
स्तनत्रयात्सप्तरात्रं सप्तरात्रं स्तनद्वयात्॥
स्तनेनैकेन षड्रात्रं त्रिरात्रं वायुभुग्भवेत्।
एतत्सोमायनं नाम व्रतङ्कल्मषनाशनम्॥

**मनुः**--यत्रात्मनो प्रमत्तस्य द्वादशाहमभोजनम्।
पराको नाम कृच्छ्रोऽयं सर्वपापप्रणोदनः॥

**जाबालः**--अहोरात्रोषितो भूत्वा पौर्णमास्यां विशेषतः ।
पञ्चगव्यम्पिबेत्प्रातः ब्रह्मकूर्च्चविधिः स्मृतः ॥
गोमूत्रङ्गोमयं क्षीरं दधि सर्पिः कुशोदकम् ।
एकैकङ् क्रमशोऽश्नीयादहोरात्रमभोजनम् ॥
कृच्छ्रस्सान्तपनो नाम सर्वपापप्रणाशनः ।
एकैकमेतदेवं हि त्रिरात्रमुपयोजयेत् ॥
त्र्यहञ्चोपवसेदन्त्ये महासान्तपनो विधिः ॥

**मनुः**---एकैकं ग्रासमश्नीयात्त्र्यहाणि त्रीणि पूर्ववत् ।
त्र्यहञ्चोपवसेदन्त्यम् अतिकृ छ्रञ्चरन्नपि ॥

**आपस्तम्बः**—सायं प्रातस्तथैवेकन्दिनद्वयमयाचितम् ।
दिनद्वयं न भुञ्जीत कृच्छ्रार्द्धन्तु विनिर्दिशेत् ॥

**मनुः**—तप्तकृच्छ्रञ्चरन् विप्रो जलक्षीरघृतान्तिलान् ।
प्रतित्र्यहं पिबेदुष्णान् सकृत्स्नायी समाहितः ॥

**याज्ञवल्क्यः**-कुशोदकन्तु गोक्षीरन्दधि मूत्रं समुद्धृतम् ।
प्राश्यापरेद्युरुपवसेत्कृच्छ्रं सन्तपनञ्चरेत् ॥

**यमः**---गोमूत्रङ्गोमयं क्षीरं दधि सर्पिःकुशोदकम् ।
एकरात्रोपवासश्च स्वपाकमपि शोधयेत् ॥
सर्वानेव च संसर्गान् त्र्यहस्सान्तपनो विधिः ।
कपिलायान्तु दुग्धायान्धारोष्णन्तु पयः पिबेत् ॥
एष मैत्रकृतः कृच्छ्रः सर्वपापप्रणाशनः ॥

**ब्राह्मे**---प्रथमेऽहनि नाश्नीयाद् गोमूत्राशी ततः परम् ।
तृतीये गोमयाशी स्याच्चतुर्थे क्षीरपो भवेत् ॥
पञ्चमे दधि भुक्त्वैव घृतं षष्ठे पिबेदथ ।
कुशोदकं सप्तमे च कृच्छ्रसान्तपनो विधिः ॥

पञ्चगव्य प्रमाणमाह पराशरः---

मूत्रमेकं पलन्दद्यादङ्गुष्ठार्द्धन्तु गोमयम् ।
क्षीरं सप्तपलन्दद्यात् पलमेकङ्कुशोदकम् ॥

**याज्ञवल्क्यः**--पृथक् सान्तपनद्रव्यैः षडहः सोपवासकः ।
सप्ताहेनैव कृच्छ्रोयं महासान्तपनः स्मृतः ॥
पर्णोदुम्बरराजीव - विल्वपत्रकुशोदकैः ।
प्रत्येकं प्रत्यहं पीतैः पर्णकृच्छ्र उदाहृतः ॥
एषान्त्रिरात्रमभ्यासादेकैकस्य यथाक्रमम् ।
तुलापुरुष इत्येष ज्ञेयः पञ्चदशादिकः ॥

भवदेवप्रायश्चित्ते--

त्र्यहं पिबेत्तु गोमूत्रं त्र्यहं वै गोमयम्पिबेत् ।
त्र्यहं त्र्यहं यावकञ्च स्त्रीकृच्छ्रञ्च तदुच्यते ॥

**यमः**--गवामाहारनिर्मुक्तैः यवैस्सक्तून् समनुतः ।
याम्यङ्कृच्छ्रं समुद्दिष्टं मासेन श्रुतिपारगैः ॥

**ब्राह्मे**---चरेत्कृच्छ्रातिकृच्छ्रन्तु पिबेत्तोयञ्च शीतलम् ।
एकविंशतिरात्रेषु कालेष्वेतेषु संयतः ॥

**यमः**--अहः कल्यमहःसायमहरद्यादयाचितम् ।
अहश्च वायुभक्षःस्याच्छिशुकृच्छ्रं विधीयते ॥

**याज्ञवल्क्यः**—पिण्याकमण्डतक्राम्बु सक्तूनां प्रतिवासरम् ।
एकरात्रोपवासश्च कृच्छ्रः सौम्योयमुच्यते ॥

अथ प्राजापत्यग्रासनियमः

सायं द्वाविंशति ग्रासाः प्रातः षड्विंशतिः स्मृतः ॥
अयाचिते चतुर्विंशः परञ्चानशनं स्मृतम् ॥
कुक्कुटाण्डप्रमाणन्तु यावांश्च प्रविशेन्मुखम् ।
एतद्ग्रासं विजानीयाच्छुद्धयर्थङ्कायशोधनम् ॥

प्राजापत्ये धेनुरेका। चान्द्रायणेऽष्टौ धेनवः। तप्तकृच्छ्रे द्वे धेनू। कृच्छ्रातिकृच्छ्रे धेनुद्वयम्। सान्तपने द्वे धेनू। यतिचान्द्रायणे धेनुचतुष्टयम्। शिशुचान्द्रायणर्षिचान्द्रायणयोरेवम्। षडुपवासे धेनुरेका। पराके द्वे धेनू। एतद्व्रताशक्तविषयम्॥

## ५२ - कर्मविपाकः

मनुः—बहून् वर्षगणान्घोरान् नरकान्प्राप्य दारुणान्।
समयात्प्रतिपद्यन्ते महापातकिनस्त्विमान्॥
श्व-शूकर-खरोष्ट्राणां गोऽजावि-मृग-पक्षिणाम्।
चाण्डाल-पुष्कशानान्तु ब्रह्महा योनिमृच्छति॥
कृमि-कीट-पतङ्गानां विड्भुजाञ्चैव पक्षिणाम्।
शूद्राणाञ्चैव सत्त्वानां सुरापो ब्राह्मणो व्रजेत्॥

याज्ञवल्क्यः—मृगाश्वशूकरोष्ट्राणां ब्रह्महा योनिमृच्छति।
खर-पुष्कशवर्णानां सुरापो नात्र संशयः॥
कृमिकीटपतङ्गत्वं हेमहारी ह्यवाप्नुयात्।
तृण-गुल्म-लतात्वञ्च क्रमशो गुरुतल्पगः॥

मनुः—शलभाहि-शरटानाञ्च तिरश्चाञ्चाम्बुचारिणाम्।
हिंस्राणाञ्चैव सत्त्वानां ते नो विप्रस्सहस्रशः॥
तृण-गुल्म-लतानाञ्च क्रव्यादं दंष्ट्रिणामपि।
क्रूरधर्मकृतानाञ्च शतशो गुरुतल्पगः॥
हिंस्रो भवति क्रव्यादः कृमयोऽभक्ष्यभक्षिणः।
परस्परादिनस्त्वेते प्रान्त्यस्त्रीयोनिसेविनः॥

याज्ञवल्क्यः—ब्रह्महा क्षयरोगी स्यात्सुरापः श्यावदन्तकः।
हेमहारी च कुनखी दुश्चर्मा गुरुतल्पगः॥
यो येन संविशत्येषां स तल्लिङ्गोऽभिजायते।
अश्वहर्त्ता मायावी स्यान्मूको वागपहारकः॥

धान्यमिश्रोऽतिरिक्ताङ्गः पिशुनः पूतिनासिकः ।
तेन कुत्तैलपायी स्यात्पूतिरक्तस्तु सूचकः ।

मनुः—संयोगं पतितैर्गत्वा परस्यैव तु योषितम् ।
अपहृत्य च निष्टम्भम्भवति ब्रह्मराक्षसः ॥
मणि-मुक्ता प्रवालैश्च हृत्वा लोभेन मानवः ।
विविधानि च रत्नानि जायते हेमकर्तृषु ॥
धान्यं हृत्वा भवत्याखुः कांस्यं हंसो जलप्लवः ।
मधुदंशः पयः काको रसं श्वा नकुलो घृतम् ॥

याज्ञवल्क्यः—परस्य योषितं हृत्वा ब्रह्मस्वमपहृत्य च ।
अरण्ये निर्जले देशे भवति ब्रह्मराक्षसः ॥
हीनजातौ प्रजायेत पररत्नापहारकः ।
पत्रं शाकं शिखी हृत्वा गन्धान् छुच्छुन्दरी शुभान् ॥
मूषको धान्यहारीस्याद्यानमुष्ट्रः फलं कपिः ।
जलप्लवः पयःकाको गृहकारी ह्यपस्करम् ॥
मधुदंशः पलं गृध्रो गां गोधाऽग्निं बकस्तथा ।
श्वित्री वस्त्रं रसं श्वा च टीरी लवणहारकः ॥

मनुः कौशेयं तित्तिरी हृत्वा क्षौमं हृत्वा तु दर्दुरः ।
छुछुन्दरी शुभान् गन्धान् पत्रशाकन्तु बर्हिणः ॥
श्वावित् कृतान्नविविधंमकृतान्नञ्च शल्लकः ।
वको भवति हृत्वाग्निं गृहकारी ह्युपस्करम् ॥
रक्तानि हृत्वा वासांसि जायते जीवजीवकः ॥
वृको मृगेभं व्याघ्रोश्वं फलपुष्पं तु मर्कटः ।
स्त्रीमृक्षः चातको वारि यानान्युष्ट्रः पशूनजः ॥
यद्वा तद्वा परद्रव्यमपहृत्य बलान्नरः ।
अवश्यं याति यत्कृत्वा तत्तद्योनिमसंशयम् ॥
स्त्रियोप्येतेन दोषेण सर्वं दुःखमवाप्नुयुः ॥

याज्ञवल्क्य: – प्रायश्चित्तमकुर्वाणाः पापेषु निरता नराः ।
अपश्चात्तापिनः कष्टान्नरकान्यान्ति दारुणान् ॥
तामिस्रं लोहशङ्कुञ्च महानिरयशाल्मली ।
रौरव कुड्मलं पूतिमृत्तिकङ्कालसूत्रकम् ॥
संघात लोहितोदञ्च सविषं सम्प्रतापनम् ।
महानरककाकोलं सञ्जीवनमहापथम् ॥
अवीचिमन्धतामिश्रं कुम्भीपाकन्तथैव च ।
असिपत्रवनञ्चैव तापनञ्चेकविंशतिम् ॥
महापातकजैर्दोषैरुपपातकजैस्तथा ।
अन्विता यान्त्यचरितप्रायश्चित्ता नराऽधमाः ॥
प्रायश्चित्तैरपैत्योनो यदज्ञानकृतम्भवेत् ।
कामतो व्यबहार्यस्तु वचनादिह जायते ॥

इति कर्मविपाकः ।

## ५३--अथ नानावचनानि

कृष्णखण्डे—ब्राह्मणस्य शवन्दृष्ट्वा न नमेद्यो नराधमः ।
यावज्जीवनपर्यन्तमशुचि र्यवनो भवेत् ॥
गुरुञ्च नार्च्चयेद्भक्त्या तस्मै नान्नन्ददाति यः ।
स भवेद्देवलो दुःखी देवशापेन पातकी ॥

स्मृतिसमुच्चये—अप्रणामागते शूद्रे स्वस्ति कुर्वन्ति ये द्विजाः ।
स शूद्रो नरक याति ब्राह्मणास्तदनन्तरम् ॥

स्मृतिसारे--क्षुत स्खलनजृम्भासु जीवोत्तिष्ठ करध्वनि. ।
गुरोरपि च कर्त्तव्यमकृत्वा ब्रह्महा भवेत् ॥

महाभारते--अजारजः खररजो रजस्सम्माज्र्जनी भवम् ।
दीपसञ्चकयोश्छाया हन्ति पुण्यं पुराकृतम् ॥
इतिहासे--विवाहकाले ऋतुसम्प्रयोगे, प्राणात्यये सर्वधनापहारे ।
विप्रस्यचार्थे त्वनृतं वदेत्तु, पञ्चानृतान्याहुरपातकानि ॥

आदिपर्वणि---न नर्मयुक्तं वचनं हिनस्ति, न स्त्रीषु राजन्न विवाहकाले।
प्राणात्यये सर्वधनापहारे, पञ्चानृतान्याहुरपातकानि ॥

व्यासः--असत्यमपि वक्तव्यं गोब्राह्मणहिताय च ।
असत्यमपि तत्सत्यमनृतञ्च न विद्यते ॥
ब्रह्मचारी यतिश्चैव विधवा च विशेषतः ।
सुरापानसमं प्राहुस्ताम्बूलस्य च भक्षणम् ॥
यतिश्च ब्रह्मचारी च विधवास्त्री तथैव च ।
पुनर्भोजनताम्बूलं भुक्त्वा चान्द्रायणञ्चरेत् ॥

पराशरः—वेदाक्षरविचारेण ब्राह्मणीगमनेन च ।
कपिलाक्षीरपानेन शूद्रश्चाण्डालतां व्रजेत् ॥

आपस्तम्बः—क्षत्रियश्चैव वृत्तस्थो वैश्यः शूद्रोऽथ वा पुनः ।
यः पिबेत्कपिलाक्षीरं न ततोऽन्योऽस्त्यपुण्यकृत् ॥
पण्डितस्यापि शूद्रस्य शास्त्रज्ञानवतस्य च ।
वचनन्तस्य न ग्राह्यं शुनोच्छिष्टं हविर्यथा ॥
शूद्रो ज्ञानबलेनैव ब्राह्मणान्द्वेष्टि वै यदि ।
स याति नरकं घोरं यावदाहूत • सम्प्लवम् ॥
कृष्णं सर्पं द्विजं नष्टं शूद्रञ्चाक्षरसयुंतम् ।
गर्द्भञ्चावजातञ्च दूरतः परिवर्ज्जयेत् ॥
हरिद्रा लवणं राजा राजमाषास्तथा गुड़ः ।
क्षीरकं फलपुष्पञ्च मङ्गलाष्टकमुच्यते ॥

मनुः - अङ्गबङ्गकलिङ्गाँश्च सिन्धसौराष्ट्रमागधान् ।
तीर्थयात्रां विना गच्छन् पुनस्संस्कारमर्हति ॥

स्मृतिसारे--गण्डकीबाहुतरणात् करतोयाविलङ्घनात् ।
कर्मनासाजलस्पर्शात्पुनस्संस्कारमर्हति ॥
पापिष्ठं चर्मदोषञ्च नग्नं कर्त्तितनासिकम् ।
प्रातःकाले तु यः पश्येत्कुर्यात्सूर्यावलोकनम् ॥

**मनुः**--आत्मनाम गुरोर्न्नाम नामातिकृपणस्य च।
आयुःकामो न गृह्णीयाज्ज्येष्ठापत्यकलत्रयोः ॥

**मिताक्षरायाम्**—लालयेत्पञ्च वर्षाणि दशवर्षाणि ताडयेत् ।
प्राप्ते तु षोड़शे वर्षे पुत्रं मित्रवदाचरेत् ॥
अश्वत्थम्मन्दवारे च सागरं पर्वणि स्पृशेत् ।
अन्यदा तु कुरुश्रेष्ठ देवयोनिरपां पतिः ॥
कुशाग्रेणाऽपि कौन्तेय न स्प्रष्टव्यो महोदधिः ।
अच्युतः कपिला श्रोत्री राजाभिक्षुर्महोदधिः ॥
दृष्टमात्राः पुनन्त्येते तस्मात्पश्येत्तु नित्यशः ॥

**मनुः**-- खण्डवस्त्रावृतस्यैकवस्त्रार्द्धालम्बितस्य च ।
उत्तरीयव्यतीते तु यत्कृतं निष्फलम्भवेत ॥

**पराशरः**—युगेयुगे तु ये धर्मास्तेषु धर्मेषु ये द्विजाः ।
तेषां निन्दा न कर्त्तव्या युगरूपा हि ते द्विजाः ॥

**महाभारते**—गतश्रीर्गणकान्द्वेष्टि गतायुश्च चिकित्सकान् ।
गतश्रीश्च गतायुश्च ब्राह्मणान्द्वेष्टि भारत ॥

**स्मृतिसमुच्चये**—यथा धेनुसहस्रेषु वत्सो विन्दति मातरम् ।
तथा पूर्वकृतङ्कर्म कर्त्तारमनुगच्छति ॥

**अगस्त्यः**--अश्वत्थ-सागरौ सेव्यौ न स्पर्ष्टव्यौ कदाचन ।
सिन्धोस्सेतोस्सरस्वत्याः गङ्गायाः पुरुषोत्तम ॥
न पर्वणि स्नानार्थं स्पृशेदन्यत्र कुत्रचित् ।

**पराशरः**—त्यजेद्देशं कृतयुगे त्रेतायाङ्ग्राममुत्सृजेत् ।
द्वापरे कुलमेकन्तु कर्त्तारन्तु कलौ युगे ॥
कृते तत्क्षणिकश्शापस्त्रेतायान्दशभिर्दिनैः ।
द्वापरे चैकमासेन कलौ संवत्सरेण तु ॥
कृते त्वस्थिगताः प्राणाः त्रेतायां मांसमाश्रिताः ।
द्वापरे रुधिरेष्वेव कलौ त्वन्नादिषु स्थिताः ॥

**मनुः**—ब्राह्मणेषु च विद्वांसो विद्वत्सु कृतबुद्धयः ।
कृतबुद्धिषु कर्त्तारः कर्त्तृषु ब्रह्मवेदिनः ॥

**पराशरः**—द्वाविमौ पुरुषौ लोके सूर्यमण्डलभेदिनौ ।
परिव्राड् योगयुक्तश्च रणे चाऽभिमुखो हतः ॥

**वसिष्ठः**—अग्निहोत्रफला वेदा शीलवृत्तफलं कुलम् ।
पतिपुत्रफला नारी दत्तभुक्तफलं वनम् ॥

**कृष्णखण्डे**—कायस्थेनोदरस्थेन मातु र्मांसन्न भक्षितम् ।
न तत्र मातृको हेतुस्तत्र हेतुरदन्तता ॥

**महाभारते**—कूष्माण्डच्छेदिका नारी दीपनिर्वापकः पुमान् ।
तावद्भवति चाण्डालो यावद्गङ्गान्न पश्यति ॥

**मात्स्ये**—रतिशक्तिर्वरा कान्ता भोज्यं भोजनशक्तता ।
दानशक्तिस्सविभवा नाल्पस्य तपसः फलम ॥

**हारीतः**—पयः पानं पुनर्दानं सामिषं पयसा निशि ।
दन्तच्छेदनमुष्णञ्च सप्त सप्तसु वर्ज्जयेत् ॥
अधर्मादेधते तात ततो भद्राणि पश्यति ॥
ततस्सपत्नाञ्जयति ततो मूलान्निकृन्तति ॥

**मनुः**—शोणितं यावतः पांशून् सङ्गृह्णाति महीतले ।
तावतोब्दांश्चमूत्राद्यैः शोणितोत्पादको वसेत् ॥
आचार्यञ्च प्रवक्तारं पितरं मातरं गुरुम् ।
न हिंस्याद् ब्राह्मणान् गाश्च सर्व एव तपस्विनः ॥

**महाभारते**—सुखार्थिनः कुतो विद्या नास्ति विद्यार्थिनः सुखम् ।
सुखार्थी वा त्यजेद्विद्यां विद्यार्थी वा सुखन्त्यजेत् ॥
अहेरिव गणाद्भीतः मिष्टान्नाच्च विषादिव ।
राक्षसीभ्य इव स्त्रीभ्यस्स विद्यामधिगच्छति ॥

श्रुतिर्विभिन्ना स्मृतयो विभिन्ना नैको मुनिर्यस्य मतन्न भिन्नम्।
मंस त वं निहि ङ् गुहायां महाजनो येन गतस्स पन्थाः ।।

**याज्ञवल्क्यः**—अर्क्कः पलाशः खदिरो ह्यपामार्गोऽथ पिप्पलः ।
औदुम्बरश्शमी दूर्वा कुशाश्च समिधः क्रमात् ।।

नुः—लवणं खदिरं मांसं पानीयं पायसन्तथा ।
क्षीरं लवणसंयुक्तङ् घृतन्तैलसमन्वितम् ।
अ ार्द्रकंगुडसंयुक्तं दधि चैव गुडान्वितम् ।।
वदरञ्चैक्षवेण सुरासमृमुदाहृतम् ।
द्रव्यान्तरेण संयुक्तं न दोषो नुरब्रवीत् ।।

**महाभारते**—अग्निदग्धञ्जले मग्नन्तस्करेण हृतन्धनम् ।
तत्सर्वम्परलोकाय विना द्यूतेन भारत ।।
राजसेवा मनुष्याणामसिधाराऽवलेहनम् ।
पञ्चाननपरिष्वङ्गो व्यालीवदनचुम्बनम् ।।

**स्मृतिसारे**—अमावास्याञ्च न छिन्द्यात् कुशाश्च समिधस्तथा ।
पर्वावस्थास्थिते सोमे हिंसायां भ्रूणहा भवेत् ।।
कुशान् काशांश्च पुष्पाणि गवार्थे च तृणादिकम् ।
निषेधे वाऽपि गृह्णीयादमावास्याऽह्नि द्विज ।।

सरोजकलिकायाम्-

दशपूर्वाऽपरान् वंश्यान् आत्मानञ्चैकविंशतिम् ।
अस्थिवाही च पुरुषः पातयेन्नरके पितॄन् ।।

**याज्ञवल्क्यः**-वृद्धभारि नृपस्नातः स्त्रीरोगिवरचक्रिणाम् ।
पन्था देयो नृपस्तेषां मान्यस्नातश्च भूपतेः ।।

**महाभारते**--कूष्माण्डघातिका नारी दीपनिर्वापकः पुमान् ।
सप्तजन्म भवेद्रोगी दरिद्रस्सप्तजन्मसु ।।
अश्वत्थजलमध्ये तु छाया पतति कुत्रचित् ।

तत्प्रयागसमं तीर्थं तत्र सन्निहितो हरिः ॥
गोभि विप्रैश्च वेदैश्च स्त्रीभिश्च सत्यवादिभिः ।
अलुब्धैर्दानशीलैश्च सप्तभिर्द्धार्यते मही ॥
कूष्माण्डेन हता नारी दीपज्योतिहतो नरः ।
चण्डिकाकूटपाठेन वंशच्छेदो भवेन्नृणाम् ॥

**पराशरः** --स्वयमेव व्रतङ्कृत्वा ब्राह्मणं योऽवमन्यते ।
वृथा तस्योपवासःस्यान्न च पुण्येन युज्यते ॥
स एव नियमो ग्राह्यो यद्येकोऽपि वदेद्द्विजः ।
कुर्याद्वाक्यन्द्विजानान्तु अन्यथा भ्रूणहा भवेत् ॥
विद्यमानेषु हस्तेषु ब्राह्मणोऽज्ञानदुर्बलः ।
तोयम्पिबति वक्त्रेण श्वयोनौ जायते ध्रुवम् ॥

**वायुपुराणे**--द्विजे देवे तथा तीर्थे भैषज्ये भिषजे गुरौ ।
यादृशी भावना यस्य सिद्धिर्भवति तादृशी ॥

**स्मृतिसमुच्चये**-द्वारोपवेशनं नित्यङ्गवाक्षावेक्षणन्तथा ।
असत्प्रलापो हास्यञ्च दूषणङ्कुल योषिताम् ॥
हतं ज्ञानंक्रियाहीनं हतास्त्वज्ञानिनः क्रियाः ।
अपश्यन्नन्धको दग्धः पश्यन्नपि हि पङ्गुलः ॥

**ब्राह्मे**--अनाथप्रेतसंस्कारः शून्यलिङ्गप्रपूजनम् ।
अनन्धकृपणेभ्यश्च दानं सर्वार्थनाशनम् ॥

**मनुः**--गुरोर्यत्र परीवादो निन्दा वाऽपि प्रवर्त्तते ।
कर्णौ तत्र पिधातव्यौ गन्तव्यं वा ततोऽन्यतः ॥

**बृहस्पतिः**--द्वारे वाप्सु प्रवेष्टव्यौ गले वद्ध्वा दृढां शिलाम् ।
धनवन्तमदातारं दरिद्रञ्चातपस्विनम् ॥
आकारैरिङ्गितैर्गत्या चेष्टया भाषणेन च ।
नेत्रवक्त्रविकारेण ज्ञायतेऽन्तर्गतं मनः ॥

प्रतिजन्म यदभ्यस्तं दानमध्ययनन्तपः ।
तेनैवाभ्यासयोगेन तदेवाभ्यसते पुनः ।।

याज्ञवल्क्यः धेनुः शङ्खस्तथाऽनड्वान् हेम वासो यथाक्रमात् ।
कृष्णा गौरायसं छाग एता वै ग्रहदक्षिणाः ।।

मनुः – सत्यम्ब्रूयात्प्रियम्ब्रूयान्न ब्रूयात्सत्यमप्रियम् ।
प्रियन्तु नानृतम्ब्रूयादेष धर्मस्सनातनः ।।
लोष्टमर्द्दी तृणच्छेदी नखखादी तु यो नरः ।
स विनाशं व्रजत्याशु सूचकोऽशुचिरेव च ।।
दृष्टिपूतं न्यसेत्पादं वस्त्रपूतं जलम्पिबेत् ।
सत्यपूतं वदेद्वाचम्मनः पूतं समाचरेत् ।।
मृगयाक्षा-दिवास्वापः परिवादः स्त्रियोमदः ।
तौर्यत्रिकं वृथा श्लाघा कामजो दशको गणः ।।

मनुः—यज्ञार्थमर्थं भिक्षित्वा सर्वं यो न प्रयच्छति ।
स याति भासतां विप्रः काकतां वा शतं समाः ।।
देवस्वं ब्राह्मणस्वञ्च लोभेनापहिनस्ति यः ।
स पापात्मापरे लोके गृध्रोच्छिष्टेन जीवति ।।
देवमाल्यापनयनं देवागारसमूहनम् ।
स्नपनं सर्वदेवानां गोप्रदानसमं फलम् ।।

पितामहः—अन्यक्षेत्रे कृतं पापन्त्वन्यक्षेत्रे विनश्यति ।
पुण्यक्षेत्रे कृतम्पापं वज्रलेपो भविष्यति ।।
पञ्चैतान्यपि सृज्यन्ते गर्भस्थस्यैव देहिनः ।
आयुः कर्मच वित्तञ्च विद्या निधनमेव च ।।
अदत्तः पुरुषो यस्तु गच्छन्पितृगृहे गृहे ।
सर्वत्र शून्यतां याति नादत्तमुपतिष्ठति ।।
त्रिभि र्मासै स्त्रिभि पक्षैस्त्रिभिर्वर्षैस्त्रिभिर्दिनैः ।
अत्युत्कटैः पापपुण्यैरिहैव फलमश्नुते ।।

## अथ-शयन विधिः ।

**मनुः**—प्राक्शिरश्शयनं विद्यां दक्षिणे सुख सम्पदः ।
पश्चिमे रोगशोकञ्च ह्युत्तरे मरणं ध्रुवम् ।।
न च नग्नः शयीतेह नचोच्छिष्टः क्वचिद्व्रजेत् ।
आर्द्रपादस्तु भुञ्जीत संविशेन्न कदाचन ।।

**विष्णुपुराणे**—प्राच्यान्दिशि शिरः शस्तं याम्यायामथवा नृप ।
सदैव स्वपतः पुंसो विपरीतं तु रोगदम् ।।

**गार्ग्यः**—स्वगृहे प्राक्शिराश्शेते अन्यत्र दक्षिणा शिराः ।
प्रत्यक् शिराः प्रवासे च न कदाचिदुदक्शिराः ।।

इति महामहोपाध्याय सचलमिश्रकृतः स्मृतितत्त्वसमुच्चयस्समाप्तः ।।

